वापन्नं, तथा हरिरेव प्रमेयं सर्वभावापन्नमिति । सर्वमेव गणयति ॥ सगुण इत्यादिना ॥ क्रिया उत्पत्त्याद्यश्च ॥ हरिरेव ॥ ८४ ॥

एवमुक्ते सम्यग्ज्ञानं न भवतीति विशेषं वक्तुमाह ॥ बुद्धीति ॥ यथा बुद्धिः सर्वं प्रमेयजातं क्रोडीकरोति तदर्थं त्रिरूपेणोपवर्ण्यते । तदैव तरतमभावो भवति ॥ ८५ ॥ प्रथमेऽष्टाविंशतिभेदाः । तेषां च कारणत्वं तत्त्वपदवाच्यत्वं च समर्थयति ॥ भगवत्त्वमिति ॥ ८६ ॥ सच्चिदानन्दभेदेषु सद्भेदा एवैते । चिदानन्दयोः कारणत्वाभावात् । एकस्य फलत्वम्, अपरस्य स्वरूपत्वमित्याह ॥ कारणत्वं न चैवास्तीति ॥ ८७ ॥ तयोर्भेदाः अनन्तास्तेन विशेषतो न वक्तव्या इति भावः । कार्येऽपि भेदानामानन्त्यम् । घटादौ तथा दर्शनात् । ननु स्वस्यासामर्थ्यादेतदुच्यते, नेत्याह ॥ अतस्तेषामिति ॥ अत एव भागवतादौ तेषां संख्या नोक्ता ॥ ८८ ॥

एवमित्यादि ॥ उक्तप्रकारेण प्रमेयबलनिरूपणार्थं द्विविधप्रमेयमध्ये प्रमाणानुरोधिप्रमेयं निरूपयितुं मङ्गलकारिकाव्यतिरिक्ताभिर्नवतिभिः कारिकाभिर्वेदादिरूपं प्रमाणं तत्स्वरूपतत्प्रमेयतदुक्तसाधनतत्फलैर्निर्णीय तेन तत्स्वरूपादिविषयान् सन्देहान्निराकृत्य स्वतन्त्रप्रमेयस्यापि बलनिरूपणार्थं तत्प्राधान्येन प्रमेयं निरूपयतीत्यर्थः । ननु कथं हरिरेव प्रमेयं जगतोऽपि विद्यमानत्वादित्यत आहुः ॥ यथेत्यादि ॥ वेदादिभावापन्नमिति ॥ सामान्ये नपुंसकम् ॥ उत्पत्त्याद्य इति उत्पत्तिस्थितिवृद्धिविपरिणामापक्षयनाशाख्याः षड्भावविकाराः । अत्र मूले सगुणनिर्गुणपदाभ्यामपरं परं च ब्रह्म, गुणपदेन सत्त्वरजस्तमांसि मायाप्रकृत्यादयः, कार्यपदेन महदादिपरमाण्वन्तं द्रव्यं, धर्मपदेन जातिगुणविशेषसमवायाद्याः, क्रियापदेन लौकिकवैदिककर्मणी, उत्पत्त्याद्य इत्यादिपदेनाभावाश्च संगृहीताः । तेन शास्त्रान्तरोक्तानपि पदार्थान् सर्वान् भगवत्येवान्तर्भाव्य शुद्धाऽद्वैतं बोधितम् । तथाच यद्यपि जगद्वर्तते तथापि तत्तज्जगत्त्वेन रूपेण

प्रमेयं, किन्तु हरित्वेन रूपेण । ब्रह्मत्वेन तु लौकिकप्रमाणाविषयत्वा-
दप्रमेयमेवेत्यर्थः । मूले, विशेषण इति ॥ व्यावर्त्तकधर्मादित्यर्थः ॥ ८४ ॥
अनेनैव प्रकारेण कोटीकरणमप्याहुरप्यकर्त्वाचार्याः ॥ यद्वैवेत्यादि ॥
यद्वैवं त्रिरूपेण ज्ञायते तदैव पुराणोपबृंहितः प्रज्ञायेयेतीच्छया कृत-
स्तस्तत्प्रभावो भवति, स्फुटो बुद्धौ भवतीत्यर्थः । एतेन प्रस्थाने सर्व-
स्य भगवद्रूपत्वेऽपि भजनं मूलरूप एव कर्त्तव्यमिति सेत्स्यतीति सू-
चितम् ॥ ८५ ॥ ॥ प्रथम इत्यादि ॥ प्रथमे कारणे अष्टाविंशतिभेदाः ।
नवैकादश पञ्च त्रीण्यात्थत्वमिति शुश्रुम * इत्येकादशाध्यायेनाष्टावि-
शतितत्त्वपक्षस्य भगवत्संमतत्वात्, षड्विंशत्यादिपक्षाणामप्यैवान्तर्भा-
वात् । अतस्तेषां तथात्वं समर्थयति — सांख्योक्तादिपरीत्या एकेन
श्लोकेनोपपादयतीत्यर्थः ॥ भगवत्त्वमित्यादि ॥ भगवतो भावो भग-
वत्त्वं भगवतः सर्वान् प्रति या सामान्यकारणता सेति यावत् । तृ-
तीयस्कन्धे तथाङ्गीकारात् । अतस्तेषां तथात्वं तस्मात्तानि तत्त्वानि,
न तु सांख्यान्तरवत् पृथक्पदार्थत्वेन तत्त्वानि । एकादशस्य चतुर्वि-
शेऽध्याये कपिलादिविनिश्चितं सांख्यं वदता भगवता, आसीज्ज्ञानमथो
अर्थं एकमेवाविकल्पितम् * इत्युपक्रम्य, तन्मायाफलरूपेण केवलं
निर्विकल्पितम् * वाङ्मनोगोचरं सत्यं द्विधा समभवद् बृहदिति
ब्रह्मण एव द्विधा भवनमुक्त्वा, तयोरेकतरो ह्यर्थः प्रकृतिः सोभया-
त्मिका * ज्ञानं त्वन्यतमो भावः पुरुषः सोऽभिधीयते इत्यादि । प्र-
कृतिर्यस्योपादानमाधारः पुरुषः परः । सतोऽभिव्यञ्जकः कालो ब्रह्म
तत्त्रितयं त्वहमिति च वाक्यात् । तथा, सर्गः कारणसम्भूतिरिति
निबन्धोक्तिसिद्धसर्गलक्षणवाक्यादेतेषु कारणत्वव्यवहार इत्यपि सूच्यते:
पूर्वभावात् पूर्वोत्पन्नत्वात् कारणत्वं, न चान्यथा, न तद्धर्मैरनुग-
माविर्मृदादिवद् घटादिकारणत्वेन । मया सञ्चोदिता भावाः सर्वे संहत्य
कारिणः * अण्डमुत्पादयामासुर्ममायतनमुत्तममिति भगवद्वाक्या-
त् । तथाच भगवता तथाङ्गीकारात् करणोऽष्टाविंशतिरेवा युक्ता प्र-
मेत्यर्थः ॥ ८६ ॥

सच्चिदानन्देत्यादि ॥ प्रपञ्चमध्यपातिषु सच्चिदानन्देषु
सजातीयत्वस्यगन्धाभ्यां चिदानन्दांशत्वेन प्रसिद्धयोर्जीवान्तर्या-
मिणो: समवायित्वस्य श्रुतिपुराणेष्वकथनात्, सदेव सोम्येदमग्र
आसीदित्युपक्रम्य, तत्तेजोऽसृजतेत्यादिना क्रमसृष्टिकथनाच्चेहापि प्र-

मवुद्देस्तथैव योद्धव्यमित्यर्थः ॥ एकस्येत्यादि ॥ ननु केवलानां जडानां तत्त्वानां चेलनं विनाऽन्तर्यामिप्रेरणं च विना कार्यजननासामर्थ्यकथनात्तयोरपि निमित्तत्वमस्तीति कथमकारणत्वमित्याकाङ्क्षायां तयोर्मध्ये एकस्य चिदंशस्य फलत्वमपरस्यानन्दांशस्य स्वरूपत्वमतो न स्वरूपेण निमित्तत्वमिति हेतोः कारणतानिषेधमाहेत्यर्थः ॥ कारणत्वं न चैवाऽस्तीति ॥ प्रपञ्चान्तःपातिनोश्चिदानन्दांशयोः कारणत्वं समवायित्वं, चकारान्निमित्तत्वं च स्वतन्त्रत्वासंवलितेन रूपेण नास्ति । तत् सृष्ट्वा तदेवानुप्राविशत् । तदनुप्रविश्य सच्च त्यच्चाभवत्, अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि, गुहां प्रविष्टौ परमे परार्द्धे इति श्रुतौ कोशानुप्रवेशोत्तरमेव नामव्याकरणादिरूपकार्यस्योक्तत्वादित्यर्थः । अत्र चिदंशस्य फलत्वं माध्यवर्णिकसूत्रभाष्ये विज्ञानमयस्य विविधयागादिसाधनफलत्वेन विवृतत्वात् स्वरूपावस्थानस्य मुक्तित्वाच्च आनन्दांशस्य स्वरूपत्वं त्वन्तर्यामिणि ब्रह्मधर्माणामतिरोहितत्वाज्ज्ञातव्यम् । नच ज्ञानं त्वन्यतमो भाव इति वाक्यात् पुरुषस्य चिदंशत्वं शङ्क्यम् । मया संनोदिता माया. सर्वं संहृत्य कारिणि * इत्यग्रिमवाक्ये सर्वपदेन पुरुषमन्तर्भाव्य संहृत्य कारित्वोक्तेरत्रापि सदेहस्यैव तस्य विवक्षितत्वात् । अत एव तृतीये, कालवृत्त्या तु मायायां गुणमय्यामधोक्षजः । पुरुषेणात्मभूतेन वीर्यमाधत्त वीर्यवानिति मैत्रेयेण वीर्याधाने करणत्वमेवोक्तं, न तु कर्तृत्वं केवलात्मभूतस्य स्वतो निर्वीर्यत्वादिति ॥ ८७ ॥ तयोरित्यादि ॥ द्वा सुपर्णेत्यादिश्रुत्या प्रतिशरीरं जीवान्तर्यामिप्रवेशश्रावणेन नानात्वमुक्तमित्यर्थः ॥ कार्येऽपीत्यादि ॥ एतेनानियतपदार्थवादोऽत्राऽप्यनुमत इति बोधितम् । श्रुतिपुराणादिषु तथाङ्गीकारादिति । मूले, नोक्तास्ते हि विशेषत इत्यनेन, सामान्यत उक्ता इति ज्ञापितम् । ते एवाग्रे गणभेदेन वक्तव्या इति बोध्यम् । तत्त्वगणनावैयर्थ्यशङ्काऽप्येतेनैव परिहृता बोध्या ॥ ८८ ॥

तत्त्वसद्भावाच्चिदानन्दयोः स्वरूपभूतयोरपि प्रथमपक्षे एव निवेशनमुक्त्वा तृतीयभेदानाह ॥

स्वरूपे तु त्रयो भेदाः क्रियाज्ञानविभेदतः ॥

विशिष्टेन स्वरूपेण क्रियाज्ञानवतो हरेः ॥ ८९ ॥

स्वरूपे त्रिति ॥ क्रियारूपे धर्मे प्रविष्टो धर्मी यत्र एकः । तथा ज्ञानरूपे धर्मे प्रविष्टो धर्मी अत्र द्वितीयः । ज्ञानक्रियोभययुतः कृष्णस्तृतीय इति त्रयो भेदाः । यतः क्रियाज्ञानवान् हरिः ॥ ८९ ॥

तत्त्वसहभावादिति ॥ तत्त्वशरीरे प्रवेशेन तथात्वात् । एतेन कार्यकोटयनिवेशो बीजमुक्तम् । मूले, क्रियाज्ञानाविभेदत इति ॥ ल्यब्लोपे पञ्चमी । तथाच क्रियां ज्ञानञ्च विभिद्य ताभ्यामेकैकं विशिष्टेन चैकमेवं त्रय इत्यर्थः । ननु क्रियाज्ञानयोर्धर्मत्वात् कथं स्वरूपभेदत्वमित्यत आहुः ॥ क्रियारूप इत्यादि ॥ एवं पड्भिः प्रमेयस्वरूपेण प्रमेयविषय उक्तस्तत्स्वरूपेण कार्यरूपेण स्वरूपेण च भगवान् प्रमातुं शक्य इति ॥ ८९ ॥

अस्य प्रमेयत्वसिद्ध्यर्थं प्रमेयबलविचारेण प्रमाणमाह ॥

विशिष्टे वाचकं गीता श्रीभागवतमेव च ॥<br>
केवले काण्डद्वितयं वेदो धर्मः प्रवेशतः ॥ ९० ॥<br>
तस्यैवोद्भूतरूपत्वात् क्रियाज्ञाने अपि स्वतः ॥<br>
अविकार्ये विकार्ये तु ह्यभुवे कार्यवन्मते ॥<br>
वेदवाच्ये तु ये रूपे तदभिव्यक्तितः फलम् ॥ ९१ ॥

विशिष्टे वाचकमिति ॥ ननु काण्डद्वयेऽपि क्रिया ज्ञानं च प्रतिपाद्यते, न तु क्रियावान् ज्ञानवान् वा । तत कथमुच्यते एकैकस्मिन्नेव एकैकं काण्डमिति तत्राह ॥ धर्म प्रवेशत इति ॥ क्रियावान् क्रियायां प्रविष्टः । अतः क्रियैव प्रतीयते । वस्तुतस्तु क्रियावान् । यज्ञो वै विष्णुरिति श्रुतेः ॥ ९० ॥

तत्र हेतुः-॥ तस्यैवोद्भूतरूपत्वादिति ॥ धर्म एवोद्भूतो, न तु धर्मी । ननु जन्यत्वात्र तद्भगवत्स्वरूपमित्याशङ्क्याह ॥ क्रियाज्ञाने अपि स्वत इति ॥ लौकिकक्रियया वृत्त्या च अभिव्यज्येते एव, न तु जन्येते इत्यर्थः ॥ तत्र हेतुः । अविकार्ये इति ॥ तर्हि लोकेऽपि क्रियाज्ञानयोर्नित्यता स्यादत आह ॥ विकार्ये त्विति॥ किञ्च कार्यमप्यस्मन्मते अभिव्यक्तमेव । अतो नेदं दूषणमित्यर्थः। तर्हि लोकतुल्यत्वात् क्रियाज्ञानप्रतिपादनार्थं किं महता वेदेनेत्याशङ्क्याह ॥ वेदवाच्ये तु ये रूपे इति ॥ तयोरभिव्यक्तिमात्रेणैव उक्तं फलं भवति । अतः फलार्थं कीर्तनमित्यर्थः ॥ ९१ ॥

अस्येत्यादि ॥ स्वरूपस्य लौकिकप्रमाणविषयत्वाभावेऽपि प्रमेयत्वसिद्ध्यर्थं प्रमेयस्वरूपस्य बलविचारेण प्रमाणमनुरुद्ध्यैव प्राकट्यफलदायकत्वरूपबलस्य विचारेण तदाहेत्यर्थः ॥ विशिष्ट इत्यादि ॥ अत्र गीतादेर्वाचकत्वं वाक्ये वैयाकरणवत्स्फुटत्वाङ्गीकाराद् बोध्यम् । तदग्रे स्फुटिष्यति । गीताश्रीभागवतयोर्विशिष्टवाचकत्वं गुरुत्वेन ज्ञेयत्वेनोपास्यत्वेन भजनीयत्वेन कर्तृत्वेनोपादानत्वेन पुरुषोत्तमत्वेन फलत्वेन विभूतिमत्त्वादिना च क्रियाज्ञानविशिष्टस्य भगवत एव मुख्यतया प्रतिपादनात् सर्वधर्मान् परित्यज्येत्यादौ स्वस्य साधनशेषतानिराकरणाच्च ज्ञेयम् ॥ प्रतिपाद्यत इति ॥ मुख्यतया प्रतिपाद्यते ॥ यज्ञ इति ॥ तथाच यजेतेत्यादौ क्रियायाः स्फुटत्वेऽपि तत्र धर्मिणः क्रियावतो वाच्यत्वं तत्क्रियास्वरूपनिर्णायकाद् वाक्यशेषादेवावगम्यत इत्यर्थः ॥ ९० ॥ नन्वेवं सति क्रियाधानेऽर्थोऽस्तु धर्मिणोन्तःप्रविष्टत्वे किं मानमत आहुः ॥ तत्रेत्यादि ॥ तत्रेति ॥ धर्मिणोन्तःप्रवेश ॥ उद्भूत इति ॥ यजत्याद्यर्थत्वेन प्रतीयमानः । तथाच यथा चक्षुरादिभिरालोकादिप्रतीतावप्यालोकादेर्धर्म्यविनाभूतत्वेन धर्मिसत्ता, तथा यजत्यादौ शक्त्या क्रियाप्रतीतावपि वाक्यशेषेण विष्णुत्वबोधनात्तत्रानुद्भूतरूपधर्मिसत्तेति लक्षणां विनैवोभयसामञ्जस्यमिति भावः । उत्तरकाण्डे तु विषयत्वेन ज्ञानशेषत्वेनैव ब्रह्मोच्यते इति ज्ञाने ज्ञानवतः प्रविष्टत्वं स्फुटमिति तदत्र नोक्तम् ॥ वृत्त्येति ॥ वृत्तिरूपेण ज्ञानेन

श्रीहरिः ।

# विद्यावैजयन्ती

—०※०—

वेदशास्त्रधर्मसंरक्षणार्थं वैश्वोद्धारार्थं आविर्भूत श्रीश्रीवल्लभाऽऽचार्य श्रीमदग्रसुतनूज श्रीपूर्णपुरुषोत्तमस्वरूप श्रीश्रीविट्ठलनाथदीक्षिताऽऽत्मज महाराज गोस्वामि श्रीश्रीयदुनाथजींवंशावतंस श्रीश्रीमुकुन्दराय श्रीगोपाललालप्रभुसेवाप्रवीण छठे ६ घरके टीकेत गोस्वामि श्रीगिरिधरजीमहाराजके उदाराश्रयमें यह विद्यावैजयन्ती नाम पुस्तकावली क्रमशः प्रकाशित होय है । एकसंख्याको मूल्य १) एक रुपिया है । विद्यासंरक्षण ये मुख्य उद्देश्य याको है । तासूँ जिनकी ये पुस्तकसङ्ग्रहकोलिये इच्छा होय सो आगे लिखे पतेसूँ मँगाय लेवें

| | |
|---|---|
| विद्यावैजयन्ती संख्या ( ३ ) | ३) |
| श्रीवल्लभाचार्यस्तुतिरत्नावली । | १) |
| श्रीभगवद्गीताटीका अमृततरङ्गिणी । | २) |
| श्रीविद्वन्मण्डनम् । | १) |
| ब्रह्मसूत्रवृत्तिः । मरीचिका | २) |
| शुद्धाद्वैतमार्तण्डः, प्रमेयरत्नार्णवश्च । | |
| अणुभाष्यम् । प्रकाशसहितम् । ( संख्या १५ ) | १५) |
| तत्त्वार्थदीपः । आवरणभङ्गसहितः । शास्त्रार्थप्रकरणम् । | २) |

## व्रजभाषा

| | |
|---|---|
| अष्टाक्षरटीका तथा सर्वोत्तमटीका | ।=) |
| श्रीवल्लभाष्टकटीका तथा चतुःश्लोकीटीका | ।) |

मि०

१ श्रीगोपालमन्दिर रत्नगोपालभट्ट काशी

२ हरिदासगुप्त चौखम्बासंस्कृत सिरीज बनारस

॥ श्रीहरिः ॥

# विद्यावैजयन्ती

नाम

## ग्रन्थरत्नावली

---

श्रीवल्लभाचार्यकुलकमलदिवाकर श्रीश्रीमुकुन्दराय-
श्रीगोपाललालप्रभुसेवाप्रवीण श्रीमत्प्रभुचरण-
गोस्वामिश्रीविठ्ठलनाथदीक्षितात्मज महाराज
गोस्वामि श्रीयदुनाथजीके घरके ६ छठी-
गादीके टीकेत काशीस्थ गोस्वामि-
श्रीगिरिधरजीमहाराजके श्री-
चरणाश्रयसों रत्नगोपाल-
भट्ट प्रकाशित ।

---

( संख्या ४) न्योछावर १)

संवत् १९६४

---

विद्याविलास प्रेस बनारस ।

श्रीमुकुन्दरायो जयति ।

श्रीगोपाललालो जयति ।

---

शेषः शाब्देऽथ काव्ये कविकुलतिलकाऽऽराध्यपादाम्बुजश्री-
र्न्याये व्याख्यातृवर्यो विमलतरमतिः सांख्यसंख्यातपदार्थः ॥
वेदे वेदान्तशास्त्रे हरिरतिनिपुणः कर्मशास्त्रे गुरुर्यो
योगे योगीन्द्रवन्द्यो निजजननिवहोद्धारकृत् कृष्णचन्द्रः ॥ १
काश्मीरो गुणकुङ्कुमे हिमकरः सन्तापनिर्वापणे
धर्माम्भोजवने नयाम्बरमणिर्दावो द्विषत्कानने ॥
सिन्धुः कीर्तिकलानिधौ निरुपधिर्बन्धुः प्रपन्ने जने
श्रीमान् भाति विभुर्गुरुर्गिरिधरस्तत्पादपद्मे नुमः ॥ २ ॥



तथा च यथा वृत्त्या आवरणभङ्गे विषयचैतन्याभिव्यक्तिस्तथा क्रियया आवरणभङ्गे क्रियारूपस्याप्यभिव्यक्तिरिति भावः ॥ अत आ- [illegible] -रिति ते चिक्रियां प्राप्नुतस्तेनोत्पत्तिनाशवती इत्यर्थः । अत्र ज्ञानक्रिययोस्त्रिक्षणावस्थायित्वपक्षे उत्पत्तिस्थितिनाशाख्यविकारत्रयवत्त्वात् । चिरस्थायित्वपक्षे वृद्ध्यपक्षयवत्त्वेन षड्विधविकारवत्त्वाद्विकार्यत्वं बोध्यम् । एवं प्रमाणेन प्रमेयनिर्णय उक्तः ॥ तर्हीति ॥ यदि स्वरूपतः सर्वस्य नित्यत्वं तर्हीत्यर्थः ॥ ९१ ॥

अनुष्ठानाद् गुरोर्वापि लौकिके लौकिकं फलम् ॥
प्रेमसेवात एव स्याद्विशिष्टव्यक्तिरुत्तमा ॥ ९२ ॥
कार्यभेदत्रिभेदान् हि कल्पयित्वा त्रिभागशः ॥
वृथा शास्त्रप्रवृत्तिर्हि यस्मात् कार्यमतिर्वृथा ॥ ९३ ॥

अभिव्यक्तिहेतुमाह ॥ अनुष्ठानाद् गुरोर्वापीति ॥ गुरोरुप-रकाण्डे लौकिकेऽपि क्रियाज्ञानयोः सफलत्वात् को विशेष इत्याशङ्क्याह ॥ लौकिकं फलमिति ॥ अन्यतः फलसिद्धिरित्यर्थः ॥ विशिष्टाभिव्यक्तौ हेतुमाह ॥ प्रेमसेवात इति ॥ भक्तिशब्दस्य प्रत्ययार्थः प्रेम, धात्वर्थः सेवा । भक्त्यैव तुष्टिमभ्येतीति वाक्यात्, पश्यन्ति ते मे इति च । विशिष्टस्य कृष्णस्य कृतार्थत्वज्ञापनायाऽभिव्यक्तिरुत्तमा । न तु दैवत्वार्थमिव ॥ ९२ ॥

ननु क्वचित् षोडशपदार्थाः, क्वचित् सप्त, तथा त्वयापि कार्येषु कथं न भेदाः कल्प्यन्त इत्याह ॥ कार्यभेदेति ॥ मुख्यमेकं पृथक्कृत्य साधनानां निरूपणम् । तत्तुल्यसंख्या हि फलकारणयोः क्वचित् । अतोऽत्र हरिं पृथक्कृत्य तत्त्वान्येव कारणत्वेन कथितानि, न त्वेकीकृत्य शास्त्रान्तरवन्निरूपितानि ॥ ९३ ॥

अभिव्यक्तिहेतुमाहेति ॥ साधनतो निर्णीतं तमाहेत्यर्थः ॥ गुरोरिति ॥ उपसत्त्याद्विना प्रसङ्गात् तस्मादित्यर्थः॥अन्यत इति ॥ तथात्र पराधीनत्वात् तज्जघन्यमिति विशेष इत्यर्थः ।

एवं वैदिके प्रमेये फलतो विशेषः उक्तः।एतेनैव वैदिकशेषभूतस्मार्तपौराणभारतरामायणप्रमेयमपि व्याख्यातं ज्ञेयम् । तत्रापि धर्मप्रकरणे क्रियाया ब्रह्मप्रकरणे च ज्ञानस्यैव प्रमेयत्वात् । तयोः श्रौतशेषतयैव मुख्ये फले उपयोगः । गौणं तु श्रौत इव कर्मसचिवदेवतोक्तत्वात् । गौणतरं त्वपूर्वद्वारेत्याद्युक्तम् । सांख्ययोगयोस्तु प्रमेयं कारणकोटौ निविशति । तथा फलमपि । तदत्र उद्देशतो वक्तव्यम् । अङ्गोपवेदादेस्तु प्रागेवोक्तेन चरितार्थमिति पृथगत्र न विचारितम् । अतः परं गीताश्रीभागवतयोः प्रमेयमवशिष्यते । तत्साधनतो निर्णयन्ति ॥ त्रिविधेत्यादि ॥ ननु, भक्त्या त्वनन्ययेति वाक्याद्भक्तिरेवाभिव्यक्तिहेतुत्वेन वाच्या, न तु सेवापीत्यत आहुः ॥ भक्तिशब्दस्येत्यादि ॥ अयमर्थः । प्रकृतिप्रत्ययौ सहार्थं ब्रूतस्तयोस्तु प्रत्ययः प्राधान्येनेति नियमादत्र धातुसामान्यार्थे शक्तोऽपि क्तिन् प्रत्ययो भजसमभिव्याहारात् प्राधान्येन भजनक्रियां वक्ति । सा च सेवात्मिका। सेवापदं च सानत्याऽऽभीक्ष्ण्यान्यतरपूर्वककायिकव्यापारविशेषे रूढम्। स्त्रीसेवा, औषधसेवेत्यादिप्रयोगदर्शनात् । तादृशव्यापारविशेषपरिचर्यारूप एव, स्वतन्त्रसेवाबोधकैर्मत्सेवया प्रतीतं च* इत्यादिवाक्यैरवगम्यते । तेषु सेवया पूर्णत्वादिकथनात् प्रेमपूर्वकत्वमपि लभ्यते । अन्यथा तस्याः कायक्लेशजनकत्वेन स्वतः पुरुषार्थत्वोक्तिभङ्गप्रसङ्गात् । एवं सति प्रेम्ण एव प्रयोजकत्वेन तस्य प्राधान्यं गम्यते । भक्तिलक्षणवाक्यैः, भक्त्यैवेति वाक्याच्च । अतः स एव प्रत्ययार्थः । कायिकव्यादिरूपा त्वप्रधानत्वात् प्रकृत्यर्थः । साऽपि, मत्पादसेवाभिरता मदीहा इति सेवनमुपक्रम्योक्तेन पश्यन्ति स इति वाक्येनावगम्यते । अतो, भक्त्या मामभीत्यादावुभयं संगृह्यत इत्यतः प्रेमसेवात्र तथोच्यत इत्यर्थः । एतेनैव पुराणान्तरप्रमेयव्यवस्थापि योजिता ज्ञेया।एवं स्वरूपविचारेण शास्त्रानुरोधिप्रमेयं सार्द्धैश्चतुर्भिः स्वरूपप्रमाणसाधनफलैर्निर्णीतम् ॥ ९० ॥

अतः परं स्वतन्त्रप्रमेयमध्ये कार्यरूपं विचारयन्ति ॥

नान्येत्यादि ॥ कार्यमिति ॥ ब्रह्मातिरिक्तस्य सर्वस्य कार्यत्वा-

तद्भेदान् द्रव्यादीन् तद्भिभेदान् पृथिव्यादीन् हि निश्चयेन एतावन्त एव नियताः पदार्था, नाधिका इत्याकारकेण विभागशः पृथग्विविच्य कार्या इन्द्रियानिन्द्रियरूपेत्याद्यवान्तरविभागेन कल्पयित्वा तज्ज्ञानेन तत्साधर्म्यवैधर्म्यज्ञानेन मुक्तिं प्रदर्श्य शास्त्रप्रवृत्तिर्वृथा न फलसाधिका यस्माद्धेतोः कार्यमात्रनिष्ठया, वाचारम्भणश्रुत्या कार्यबुद्धिरेव न फलजनिकेत्युक्तं, तस्मादित्यर्थः। तस्मात्तत्कार्यतया हेयत्वेनैव अङ्गीकार्यं, न तु फलायेति भावः। ननु यद्येवं तर्हि तत्त्वगणनाऽप्यपार्था, तेषामपि कार्यत्वादित्यत आह ॥ मुख्यमेकमित्यादि ॥ तेषां च कार्यत्वेऽपि बोधसाधनत्वेन पुराणपूर्वत्वाद् भगवदुक्तं पक्षमाश्रित्य कारणत्वेन गण्यन्ते, अतो न पूर्वोक्तदोष इत्यर्थः ॥ ९३ ॥

सत्त्वं रजस्तमश्चैव पुरुषः प्रकृतिर्महान् ॥
अहङ्कारः पञ्चमात्रा शब्दस्पर्शाकृती रसः ॥ ९४ ॥
गन्धो भूतानि पञ्चैव खं वायुर्ज्योतिरपः क्षितिः ॥
क्रियामयानीन्द्रियाणि वाग्दोर्मेण्ढ्राङ्घ्रिपायवः ॥
श्रोत्रं त्वग्घ्राणदृग्जिह्वा मनः षडिति भेदतः ॥ ९५ ॥
आध्यात्मिकस्तु यः प्रोक्तः सोऽसावेवाधिदैविकः ॥
अतो हि देवतावर्गं इन्द्रियेभ्यो न भिद्यते ॥ ९६ ॥
माया तु गुणरूपा हि कालस्तु भगवान् परः ॥
सूत्रं महांस्तथा प्राणो बुद्धिश्चाहमभेदतः ॥ ९७ ॥

तत्त्वानि गणयति ॥ सत्त्वमिति ॥ मनः षडित्यन्तेन। मनसः क्रियामयत्वं ज्ञानमयत्वं चाह ॥ भेदत इति ॥ मनसा सह क्रियायां षडिति ॥ ९४ ॥ ९५ ॥

देवतावर्गेणाधिकसंख्यामाशङ्क्य परिहरति ॥ आध्यात्मि-

कास्त्विति ॥ माया भिन्नेत्याशङ्क्याह ॥ माया त्विति ॥ कालस्तु भगवत्स्वन्तर्भूतः । सूत्रं तु महत्तत्त्वमेव । तथा प्राणो बुद्धिश्च अहङ्कार एव ॥ तस्मादष्टाविंशतिसंख्याकान्येव ॥ २६ ॥ २७ ॥

गणयन्तीति ॥ पूर्वं संख्याया उक्तत्वात् तत्पूरणाय गणयन्तीत्यर्थः । अत्र, सत्त्वमित्यादिसार्द्धद्वयेनाष्टाविंशतीनामुद्देशमात्रं कृतम् । लक्षणं तु सत्त्वादिगुणानां, तत्र सत्त्वं निर्मलत्वाद् * इत्यादिभ्यो गीतावाक्येभ्यो ज्ञेयम् । पुरुषादीनां पञ्चविंशतीनां तु तृतीयस्कन्धस्थकापिलेयवाक्येभ्यः । तत्सर्वं तु सुबोधिन्यां, विवृतम् । तत्र चैकैकस्य लक्षणत्रितयमुक्तम् । तेभ्यो व्यवहारोपयोगाय मया प्रस्थानरत्नाकरे उद्धृत्यानूदितानि परीक्षितानि चेति तत्प्रपञ्चस्ततोऽवधेयः । उद्ग्रन्थविस्तरभियाऽत्र न लिख्यते ॥ २४ ॥ २५ ॥ ॥ देवतावर्गेणेति ॥ तैजसादिन्द्रियाणि त्विति तैजसशब्दवाच्याद्राजसाहङ्कारादिन्द्रियोत्पत्तिः, वैकारिकान्मनो जज्ञे देवा वैकारिका दश * दिग्वातार्कप्रचेतोऽश्विवह्नीन्द्रोपेन्द्रमित्रका इति वैकारिकशब्दवाच्यात् सात्त्विकाहङ्काराद्देवतोत्पत्तिरित्युत्पत्तिभेदादुक्तरूपेण तेनेत्यर्थः ॥ आध्यात्मिक इति॥द्वितीयस्कन्धस्य दशमे आध्यात्मिको यः पुरुषः सोऽसावेवाधिदैविक इत्यत्र जीवान्तर्यामिणोः कार्यभेदेऽपि पाचकपाठकवदभेद एव प्रतिपादितः । प्रकृतेऽपि तृतीयस्कन्धस्य षष्ठे, त्रयोविंशतितत्त्वानां गण युगपदाविशदिति * प्राधानिकस्य गणस्य सख्यामुक्त्वाऽग्रे, तस्याग्निरास्यं निर्भिन्नं लोकपालोऽविशत् पदम् * वाचा स्वांशेन वक्तव्यं ययाऽसौ प्रतिपद्यत इत्यादिष्विन्द्रियाणां देवांशत्वं कण्ठत एवोक्तम् । श्रुतौ चाग्निर्वाग्भूत्वा मुखं प्राविशदित्युक्तम् । तेनेन्द्रियाणां देवांशत्वाद्देवाभिन्नत्वम् । आध्यात्मिकादिपदार्थस्तु, आत्मनीत्यध्यात्मं तत्र भव आध्यात्मिकः । एवमाधिदैविकोऽपि । एवं सति देहेषु भोगादिषु देवतावर्गस्य स्वातन्त्र्येऽपि देहमधिष्ठाय कार्यकरण इन्द्रियाणामेव प्राबल्यस्य पूर्ववाक्यपूक्तत्वात् तदाधिदैविकानामपि तेष्वेव निवेश इत्यत आध्यात्मिकेभ्य इन्द्रियेभ्यः स न भिद्यत इत्यर्थः ॥ माया भिन्नेत्याशङ्क्येति ॥ रजः सत्त्वं तम इति निर्गुणस्य गुणास्त्रयः * सर्गस्थितिनिरोधेषु गृहीता मायया विभोरिति

वाक्ये मायागुणयोर्ग्राह्यग्राहकभावोक्तेर्भिन्नेत्याशङ्क्येत्यर्थः । गुणरूपत्वं तु, दैवी ह्येषा गुणमयीति वाक्यात् । ननु तथा सति कथमनयोर्वाक्ययोरविरोध इति चेत् । इत्थम् । सामर्थ्यरूपा हि सा । यथा पुरुषस्य कर्मकरणादौ शक्तिः । अत एव कार्यकांक्षिया । क्रियावतीव इति श्रुतेश्च । एवं सति सिसृक्षया गुणानुत्पाद्य तेषु तां निक्षिपतीति, तदात्मैव सोच्यते । कीर्तिन्यायाच्च न भगवच्छक्तित्वहानिरतो नानुपपत्तिः कापि । कालो वैशेषिकादिमते द्रव्यान्तरम् । अनीश्वरकापिले तु, दिक्कालावाकाशादिभ्य इति सूत्रादाकाशेऽन्तर्भावितः । एकदेशिमते त्वतिरिक्तं प्राकृतिकं तत्त्वम् । अपरैकदेशिमते त्वदृष्टारम्भकस्य कर्मसंयोजकः पुरुषस्य धर्मः सामर्थ्यविशेषो वा कालः इति । तदेकमपि स्वाभिमतं न भवति, किन्तु श्रुतौ कार्यकोटावगणनाद्भगवदैश्वर्यप्रकथनात्, ततोऽभिव्यञ्जकः कालो ब्रह्म तन्निश्चयं स्वहमिति * प्रकृतेर्गुणसाम्यस्य निर्विशेषस्य मानवि * चेष्टा यतः स भगवान् काल इत्युपलक्षण इति वाक्यार्थं च भगवदात्मक एवेत्याशयेनाहुः ॥ कालाभिव्यक्त्यादि ॥ ननु तेभ्यः समभवत्सूत्रमिति वाक्यात् सूत्रं नाम तत्त्वं भिन्नमेवेत्यत आहुः ॥ सूत्रं तु महत्तत्त्वमेवेति ॥ तेभ्यः समभवत् सूत्रं महान् सूत्रेण संयुतः * इति वाक्यादेव, तथेत्यर्थः । एतद्वाक्यार्थस्तु, सूत्रं सूचनात् क्रियाशक्तिमान् प्रथमो विकारः । ततो महान् ज्ञानशक्तिमान् । स च सूत्रेण संयुतः सम्यङ् मिश्रितः, ततः पृथङ् न, किन्त्वेकमेव तत्त्वं ज्ञानक्रियाशक्तिभ्यां द्वेधोच्यत इति । द्वितीयस्कन्धे तु, ततः प्राणो महानसुरिति प्राणात्मकत्वमप्यस्योक्तम् । वेदे च आसन्यत्वेन प्रसिद्धो भगवद्रूपत्वस्य सूत्रेऽश्वतारात् । एतद्रूपता च नामसूत्रबुद्ध्योरुच्यते । प्राणबुद्धिभ्यां तस्याधिक्यमाशङ्क्य परिहरन्ति ॥ तथा प्राणो बुद्धिश्चेति ॥ बुद्धिः प्राणस्तु तैजस इति वाक्यात् । तैजसो राजसाहङ्कारामिव इत्यर्थः । अस्मिन् पक्षे तैजसाहङ्कार एवाऽन्यथावतारो ज्ञेयः । अतो नानुपपत्तिः । भगवदीयसांख्ये तयोरुत्पत्तिर्नोक्तेत्यत्रापि तत्त्वान्तरता नोक्ता । अतो न तत्त्वाधिक्यमित्यर्थः । एतेन तृतीयस्कन्धे, तैजसात्तु विकुर्वाणाद् बुद्धितत्त्वमभूत् सतीति * यदुक्तं तत् कल्पान्तरानुसा-
5 रित्वात्तदंशमिति ज्ञापितम् । प्राणस्य वायुसमानाकारत्वमात्रमादायैव वायुलक्षणे सर्वेन्द्रियाणामात्मत्वमुक्तं, न तु तामसत्वं वायुरूपत्वं,

वाऽऽद्रायेत्यप्यवधेयम् । अन्यथा तामसीं सृष्टिं वदन् शास्त्रकारस्तैजसानामिन्द्रियाणामात्मत्वं कथं वदेत् । ननु कचिदाकाशादिपञ्चकसत्त्वांशेभ्यो बुद्ध्युत्पत्तिकथनात् सात्त्विकत्वं प्रतीयते । श्वासोच्छ्वासाभ्यां वायुत्वेन प्राणस्य तामसत्वमतः कथमुभयो राजसत्वमितिचेन्न । जननक्रियायामुभयोर्व्यापृतत्वाज्जननस्य च रजोधर्मत्वादनुपपत्तेरिति । प्राणलक्षणं तु सर्वेन्द्रियबलदातृत्वम् । अत एव ओजःसहोबलानि प्राणधर्माः । ओज इन्द्रियशक्तिः, सहो मनःशक्तिर्बलं च देहशक्तिरिति । अयं चाऽणुः सामर्थ्येन शरीरे सकले प्राणापानव्यानोदानसमानभेदात् पञ्चधा तिष्ठति । कचित्तु, नागकूर्मकृकलदेवदत्तधनञ्जयभेदेन दशधाऽप्युक्तः । एतेषां स्थानकार्यादिकं विस्तरभयान्नोच्यते, सर्वजनीनत्वात्प्रमाणमपि । बुद्धिस्तु, बुद्धिश्च षोडश्यं चेति श्रुतौ करणानुक्रमणे सिद्धा । इदयस्था, विशिष्टज्ञानलक्षणकार्यानुमेया च । तत्साधितमाचार्यैः । यो बुद्धिमांस्तस्य पदार्थज्ञानं भवतीति, सुबुद्धिरयं पदार्थान् जानातीति च ज्ञानकारणत्वेन बुद्धिर्व्यपदिश्यते । कार्यकारणयोरभेदोपचाराच्च बुद्धिज्ञानयोः पर्यायत्वव्यवहारः । अन्यथा बालस्य बुद्ध्यभावेन पदार्थज्ञानं सम्यङ् न भवति तन्न स्यादिति । बुद्धेर्लक्षणानि तु त्रीणि । तत्र, द्रव्यस्फुरणविज्ञानत्वं स्वरूपलक्षणम् । इन्द्रियानुग्राहकत्वं, संशयविपर्यासनिश्चयस्मृतिस्वप्नवृत्तिकत्वं चेति द्वयं कार्यलक्षणम् । तदुक्तम्—

द्रव्यस्फुरणविज्ञानमिन्द्रियाणामनुग्रहः * संशयोऽथ विपर्यासो निश्चयः स्मृतिरेव च * स्वाप इत्युच्यते बुद्धेर्लक्षणं वृत्तितः पृथगिति । प्रथमलक्षणे द्रव्यपदं विषयमात्रोपलक्षकम् । तेन विषयनिर्विकल्पकोत्तरं शब्दादिना यद् विशिष्टज्ञानं तादृगाकारा बुद्धिरित्यात्मिकं तल्लक्षणम् । निर्विकल्पकाकारा तु न बुद्धिः । तारतम्याऽज्ञापनेनेन्द्रियाननुग्राहकत्वात् । विशिष्टज्ञानाकारत्वाच्च । योगजधर्मजन्यविज्ञानस्यापि विशिष्टज्ञानरूपत्वात्तद्वारणाय समुदितमुपात्तम् । तेनेदं फलति । योगजधर्माऽजन्यो विशिष्टज्ञानसमानाकारो ज्ञानेन्द्रियानुग्राहकः पदार्थो बुद्धिरिति । तृतीयलक्षणोक्ता वृत्तयस्तु कार्यज्ञाननिरूपणे संशयादीनां स्वरूपकथने तत्तत्समानाकारत्वेनैव ज्ञाता भविष्यन्तीति प्रस्थानरत्नाकर एव ता विवृता इत्यतो नात्र लक्ष्यन्ते । प्रकृतमनुसरामः । एवं तत्त्वाधिक्यं परिहृत्य निगमयन्ति । त-

त्मादित्यादि ॥ ९६ ॥ ९७ ॥

प्रकृतिः पुरुषश्चोभौ परमात्माऽभवत् पुरा ॥
यद्रूपं समधिष्ठाय तदक्षरमुदीर्यते ॥ ९८ ॥
आनन्दांशतिरोभावः सत्त्वमात्रेण तत्र हि ॥
मुख्यजीवस्ततः प्रोक्तः सृष्टीच्छावशगो हरिः ॥९९॥
इच्छामात्रात्तिरोभावस्तस्याप्यनुवर्तते ॥
ब्रह्मकूटस्थाऽव्यक्तादिशब्दैर्वाच्यो निरन्तरम् ॥१००॥
सर्वावरणयुक्तानि तस्मिन्नण्डानि कोटिशः ॥
मूलाविच्छेदरूपेण तदाधारतया स्थितः ॥ १०१ ॥
प्रभुत्वेन हरेः स्फूर्तौ लोकत्वेन तदुद्भवः ॥
अन्तर्याम्यवतारादिरूपे पादत्वमस्य हि ॥
हंसाकृतित्वयने पुच्छत्वं परमात्मनः ॥ १०२ ॥

अक्षरकर्मस्वभावांश्निरूपयन् प्रथममक्षरमाह ॥ प्रकृतिः पुरुषश्चेति ॥ भगवान् यदा येन रूपेण कार्यं कर्तुमिच्छति तद्रूपमेव व्यापारयति ॥ तत्र ज्ञानेन मोक्षो देय इति यदा विचारयति तदाऽक्षरमेव ब्रह्मस्वरूपं पुरुषोत्तमस्याधारभागश्चरणस्थानीयः, तस्मादौ चतुर्मूर्तीकरोति। अक्षररूपं, ब्रह्मरूपं, कालरूपं, स्वभावरूपं च। तत्र यस्य रूपस्य द्वैरूप्यं भवति प्रकृतिपुरुषभेदेन तदक्षरम् ॥९८॥ ननु पुरुषोत्तमस्वरूपात्तत्र को विशेष इति चेत्तत्राह ॥ आनन्दांशतिरोभाव इति ॥ अग्रेऽहमेवं भविष्यामीतीच्छामात्रेणान्तःसमुत्थितसत्त्वेनानन्दांशस्तिरोहित इव भवति । तेन सृष्टीच्छया व्याप्तो भगवान् मुख्यजीवशब्दवाच्योऽपि भवति । अत एव औडु-

लोभिमते जीवानां चिद्रूपाणां चिद्रूपे स्वयोग्ये ब्रह्मणि प्रवेशः ॥९९
नन्वानन्दांशतिरोभावे जीवत्वमेव स्याद् यथा मदादीनामित्या-शङ्कयाह ॥ इच्छामात्रादिति ॥ इच्छायां प्रविष्टायां कार्यव्यापृता तिरोभाव इवोच्यते । वस्तुतस्त्वानन्दमय एव । अत एव पुरुषोऽवतारो भविष्यति । इच्छारूपायाः प्रकृतेर्भिन्नत्वे वाचकैरपि तस्य न जीवत्वमित्यभिप्रायेणाह ॥ ब्रह्मेति ॥ आदिशब्देना-ऽसत्तमःशब्दादयो गृह्यन्ते । तथापि न पुरुषोत्तमाद्विभक्ततयाऽव-स्थितः, किन्तु निरन्तर एव ॥ १०० ॥ तस्यैव कारणत्वं ज्ञाप-यितुं तत्रैव कार्यस्थितिमाह ॥ सर्वावरणयुक्तानीति ॥ तदाहुरक्षरं ब्रह्मेति वाक्यात् । एतस्याक्षरस्य पुरुषोत्तमे अभेदेन यथा निवेशस्तथा प्रकारा उच्यन्ते । तदाह ॥ मूलाविच्छेदेति ॥ मूलेन पुरुषोत्तमेन सह, अविच्छिन्नतया, तिष्ठति, न तु कार्यत्वेनेत्याह ॥ तदाधारतयेति ॥ एषा स्थितिः सर्वदा ॥ १०१ ॥

कदाचित् पुनः पुरुषोत्तमश्चेदाविर्भवति तदाक्षरमपि बहुधा भवतीत्याह ॥ प्रभुत्वेनेति ॥ प्रभुर्वैकुण्ठवासी लोको वैकुण्ठः । जीवजडाकारेण प्रादुर्भवतीत्यर्थः । अत एव वैकुण्ठवासिना मुक्ताः । ततोऽपि पुरुषोत्तमो महान् । अत एवाभेदश्चास्मदादीनामिति वाक्यं सङ्गच्छते । अन्तरुपासनायाम् अन्तर्यामिरूपेण प्रकटो भवति । तदा सद्योमुक्तौ ज्ञानिनस्तच्चरणारविन्दमेव प्रविशन्तीत्य-ऽक्षरस्य पादत्वम् । तथावतारेऽपि । चैद्ये च सात्त्वतपतेश्चरणं प्रवि-ष्ट* इति । आदिशब्देनाधिदैवादिरूपेष्वपि । आनन्दमयनि-रूपणे हंसाकृतित्वकथनं तत्र, ब्रह्मपुच्छं प्रतिष्ठेति ब्रह्माक्षरमानन्दमय-स्य पुच्छमिति निःसन्देहाय परमात्मपदम् ॥ १०२ ॥

प्रक्षतनु पर त्वप्रोक्त यत् तद् विचारयन्ति ॥ अक्षरेत्यादि ॥ तदाहुरक्षर ब्रह्म सर्वकारणकारणमिति * तृतीयस्कन्धवाक्यादक्षरस्य

कालं कर्म स्वभावं च मायेशो मायया स्वया * आत्मन् यदृच्छया प्राप्तं विबुभूषुरुपाददे । कालाद् गुणव्यतिकरः परिणामः स्वभावतः । कर्मणो जन्म महतः पुरुषाधिष्ठितादभूदिति द्वितीयस्कन्धवाक्यात् कालकर्मस्वभावानामपि ब्रह्माण्डसृष्टिपूर्वभावित्वात्तत्त्वता भविष्यतीति कथमष्टाविंशतिरेव तत्त्वानीत्याशङ्कायामेतेषां तत्त्वतानिराकरणार्थमेतच्चतुष्टयस्वरूपं निरूपयिष्यन् प्रथममक्षरं लक्षयतीत्यर्थः । अथाक्षरकर्मस्वभावानित्यत्र मध्ये कालशब्दस्त्रुटित इति प्रतिभाति, तथाग्रे, ब्रह्मरूपमित्यत्र कर्मरूपमिति पाठश्च । व्याख्यानग्रन्थस्वारस्यादिति बोध्यम् । नन्वेवमधिष्ठानस्य किं प्रयोजनमत आहुः ॥ भगवानित्यादि ॥ तथा चाक्षरज्ञाने श्रुतौ मोक्षस्योक्तत्वात् तस्याव्यक्तत्वेन दुर्ज्ञेयत्वात्तस्य ज्ञानार्थमेवं तदधितिष्ठतीत्यर्थः ॥ एवं प्रयोजनमुक्त्वा लक्षणं व्याकुर्वन्ति ॥ तत्र यस्य रूपस्येत्यादि ॥ इदमेव च श्रीभागवते सर्वकारणकारणपदेनोक्तम् । सर्वकारणयोः प्रकृतिपुरुषयोः कारणमिति व्याख्यानात् । द्विधा समभवद् बृहदिति, व्याख्यातं च । अत्र मूले समधिष्ठायेति कथनात् सृष्टिकरणे आधाराकाङ्क्षापि पूरिता । तेन यात्र ऊर्णनाभदृष्टान्ते याऽनुपपत्तिः साऽपि परिहृता बोध्या ॥ ९८ ॥ भवतीति ॥ तथा च पुरुषोत्तमस्तु लीलया इच्छां करोति, न तु तया व्याप्रियत इत्यतिरोहितानन्दः । अक्षरं तु तया व्यापृतं सन्मूलभूतेन स्वांशेन तिरोहितानन्दं मुख्यजीवपदवाच्यतां धत्त इवेव विशेष इत्यर्थः । आनन्दांशतिरोभावे गमकमाहुः ॥ अत एवैतदुक्तमित्यादि ॥ अक्षरस्यानन्दमयत्वे गमकमाहुः ॥ अत एवेत्यादि ॥ अत्रेदं हृदयम् । प्रकृतिभर्तुः पुरुषस्य निर्वृतात्मन इत्यनेनानन्दमयत्वमुक्तम् । ब्रह्माण्डदेहप्रविष्टपुरुषस्य च प्रथमस्कन्धे वाराहाद्योऽवतारा उक्ताः । त एव च द्वितीयस्कन्धे लीलावतारत्वेनानन्दाकारा उक्ताः । तत्र तत्र तेषां तथात्वं च साधितम् । एवं सति यदवताराणामानन्दमयत्वं तदवतारिणः पुरुषस्याप्यानन्दमयत्वमर्थसिद्धम् । तथा सति तदवतारिणोऽक्षरस्यानन्दमयत्वे कः सन्देह इति । एवं च ब्रह्माण्डस्य ब्रह्मशरीरत्वं यत्र कल्पे तत्रत्या व्यवस्था ॥ ९९ ॥ गमकान्तरमप्याहुः ॥ इच्छारूपाया इत्यादि ॥ भिन्नत्वे इति ॥ या पूर्वं ब्रह्मण्येवेच्छारूपा तथा एव पिण्डिततया घनीभावेन प्रकृतिरूपतया पृथक्स्थितावित्यर्थः । अत्र वाचकनिर्देशेन प्रमाणानुरो-

धित्वमक्षरस्य स्फुटीकृतम् । ब्रह्मशब्दवाच्यत्वं तु तदाहुरक्षरं ब्रह्मेत्यत्रोक्तम् । एवं श्रुतावपि । तथा, कूटस्थोऽक्षर उच्यते । अव्यक्तोऽक्षर इत्युक्त इति । कूटवन्निर्विकारतया स्थितं कूटस्थम् । कूटस्थशब्दस्याक्षरपर्यायत्वकथनेन स्थूलसूक्ष्मदेहद्वयावच्छिन्नं चैतन्यं कूटस्थपदवाच्यमित्यङ्गीकुर्वन्तो विद्यारण्याद्या निरस्ताः । शक्तिग्राहकस्यालाभादिति । शेषं स्पष्टम् ॥ १०० ॥ तदाहुरिति ॥ विकारैः सहितो युक्तैर्विशेषादिभिरावृतः * आण्डकोशो बहिरयं पञ्चाशत्कोटिविस्तृतः । दशोत्तराधिकैर्यत्र प्रविष्टः परमाणुवत् । लक्ष्यन्तेऽन्तर्गताश्चान्ये कोटिशोऽप्यण्डराशयः । तदाहुरक्षरं ब्रह्म सर्वकारणकारणमिति । एवमस्य प्रमाणान्निर्णय उक्तः । प्रमेयाद्वक्तुमाहुः ॥ एतस्येत्यादि ॥ उच्यन्त इति ॥ श्रीभागवतादावुच्यन्त इत्यर्थः । एवा स्थितिरिति ॥ मूलं पुरुषोत्तमस्तमाधारं कृत्वा या स्थितिः सेति । तदक्षरं तत्सवितुर्वरेण्यं, यन्नद्वै तदक्षरं गार्गीत्यादिश्रुतौ ब्रह्माऽभेदश्रावणात् तदवच्छिन्नतया, तदक्षरं परमे व्योमन्नित्यत्राधारतया श्रावणादक्षरात्परतः पर इत्यत्र पुरुषात्परत्वश्रावणाच्च तथेत्यर्थः । न च पुरुषोत्तमस्याक्षरस्य वाऽऽधारान्तरमपेक्षणीयम् । मूले मूलाभावादमूलं मूलमिति न्यायात् । एवं सति, तद्धाम परमं ममेत्यादिभिर्धर्मभेदे स्मृते तन्निरूपयवाङ्क्षेदेति । सा च, अक्षरमम्बरान्तधृतेरित्यत्राक्षरशब्दवाच्यत्वस्य ब्रह्मणि व्यवस्थापनात् परिहृता । स्वस्यैवाऽऽधारत्वमाधेयत्वं चेति तु विरुद्धधर्माश्रयत्वादेव सिद्धमिति न शङ्कावकाशः ॥ १०१ ॥ जीवजडाकारेणाविर्भवतीति ॥ इदं च द्वितीयस्कन्धनवमाध्याये प्रसिद्धम् ॥ ततोऽपीति ॥ प्रभुत्वादपीत्यर्थः । एवं स्वरूपकोटिस्थत्वेऽपि न्यूनत्वं समर्थितम् । शेषं स्फुटम् ॥ अत एवेति ॥ अक्षरात्मत्वादेवेत्यर्थः । एतेन पक्षात्मवादस्यापि मूलमुक्तम् ॥ अत एवेति ॥ मुक्तस्याधिक्यादेव । अभेद इति वाक्यं [illegible] स्कान्दं भारततात्पर्ये मध्वाचार्यैरुपन्यस्तम् । अभेदश्चास्मदादीनां मुक्तानां हरिणा तथा * इत्यादि सर्वं मोहाय कथ्यते पुत्र नान्यथेति * । एवं प्रमेयान्निर्णय उक्तः ॥ १०२ ॥

तदुपासनया ज्ञानात् परमात्मत्वमस्य हि ॥

ज्ञानमार्गे त्वेतदेव सेव्यं कृष्णस्ततोऽधिकः ॥
रूपान्तरं तु तस्यैव सर्वसामर्थ्यसंयुतम् ॥ १०३ ॥
चिदानन्दतिरोभावस्तदनुक्रम एव च ॥
ईषत्सत्त्वांशप्राकट्यं बहिरन्तस्तु सर्वतः ॥ १०४ ॥
चिदानन्दावपि तथा स कालः सकलोद्भवः ॥
क्रियाशक्तिप्रधानस्त्वाखिलगः सकलाश्रयः ॥ १०५ ॥
विकृतावेव तच्छक्तिः सर्वोत्पत्त्यन्तभावनः ॥
ऐश्वर्यं भगवद्धर्मं तत्रैव प्रतितिष्ठति ॥ १०६ ॥
अत एवेश्वरः प्रोक्तः सर्वान्तर उदीरितः ॥
आसुरादिमते तस्मान्नान्यः सेव्यः कथञ्चन ॥ १०७ ॥
मुख्याधिकारी कृष्णस्य प्रभुवत् फलसाधकः ॥
सूर्यगत्या तु तद्भेदाः सूर्यस्तस्याधिभौतिकम् ॥
आध्यात्मिकं तु तद्भेदाः क्वचिदिच्छाऽपि भेदिका ॥ १०८ ॥

एवमनेकभावापन्नमपि ज्ञानमार्गेऽक्षरत्वेनैव सेव्यमित्याह ॥ त-दुपासनयेति ॥ प्रथमतस्तस्यैव निदिध्यासनेन यज्ज्ञानमुत्पद्यते तेनास्याधिकारिणः परमात्मत्वमेव, न त्वक्षरमात्रत्वेति भगवद्वचनादवगम्यते । ते प्राप्नुवन्ति मामेवेति हिशब्दार्थः । भक्तिमार्गे त्वा-रम्भत एव परमानन्दः । ज्ञानमार्गे त्वन्तत इति विशेषः । तथा-पि ज्ञानमार्गे अक्षरमेव सेव्यम् । एवमभेदेऽपि वैलक्षण्यं निरूप्य यदर्थमेतन्निरूपितं तदाह ॥ कृष्णस्ततोऽधिक इति ॥ अक्षरादपि चोत्तम इत्यादिवाक्यं समर्थितं भवति । तस्यैव रूपान्तरं काल

इत्याह ॥ रूपान्तरमिति ॥ तस्य रूपान्तरत्वे हेतुमाह ॥ सर्वसामर्थ्यसंयुतमिति ॥ सर्वाकारेण भवनातिरिक्तं यावत् किञ्चित्सामर्थ्यं मायाया विशेषस्तत्संयुतम् । तेनास्य सर्वाधिकारित्वं निरूपितम् ॥ १०३ ॥ तस्य रूपमाह ॥ चिदानन्दतिरोभाव इति ॥ सच्चिदानन्दरूपेषु द्वयोस्तु स्वेच्छयातिरोभावः । उपासनायामन्यथा करणाभावायानन्दांशस्य सर्वथाऽनुद्गमः । सजातीयत्वेन जीवसङ्कोचाभावाय चिदंशस्याप्यनुद्गमः । जडादपि वैलक्षण्यमाह ॥ ईपत्सत्त्वांशभाक्त्वमिति ॥ व्यवहारे सर्वानुभवसम्भवेऽपि सर्वाऽप्रत्यक्षत्वात् । तर्हि आकाशतुल्यता स्यादित्याशङ्क्याह ॥ अन्तस्तु सर्वत इति ॥ स बहिर्मुखाणां बहिर्व्यवहारे पूर्वोक्तप्रकार एव । ज्ञानिनां तु सच्चिदानन्दरूपो भगवानपि कदाचित्तद्रूपो भवतीति । अतः सच्चिदानन्दरूपोऽन्तःप्रकटः । तस्य प्रयोजनमाह ॥ सकलोद्भव इति ॥ सकलस्योद्भवो यस्मात् । तस्य परमार्थदर्शने कार्य्यसिद्धिर्न भविष्यतीति भगवांस्तं क्रियाशक्तिप्रधानमेव कृतवान् । अतः सकलोद्भवहेतुः । नित्यगश्च चलनैकस्वभावः । तथा सति सर्वनियामकत्वं न भविष्यतीति विशेषमाह ॥ सकलाश्रय इति ॥ सर्वं जगत् स्वस्मिन् स्थापयित्वा निरन्तरं गच्छति । अत एव नित्यप्रलयसिद्धिः । कृष्णस्य इदं सामर्थ्यम् । तच्च पुरुषोत्तमात्सर्वातिरिक्त एवेत्याह ॥ विकृताविवेति ॥ विकृतौ किं करोतीत्याकाङ्क्षायामाह ॥ सर्वोत्पत्त्यन्तभावन इति ॥ केचिदस्यैश्वरत्वमाहुः । केचिदन्तर्यामिणः । तत्रास्यैश्वरत्वे हेतुमाह । ऐश्वर्यं भगवद्दत्तमिति । मुख्योऽयमधिकारी तेन सर्वापेक्षया भगवत्सेवकेष्वयमन्तरङ्गः । अस्य महत्त्वाय सेवकानुपासनाप्रकारं चाह ॥ आसुरादिमते तस्मादिति ॥ तस्यान्यथाकरणं व्यावर्त्तयति ॥ प्रसुवन् फलसाधक इति ॥ तस्य परिज्ञानार्थं तद्भेदानाह ॥ सूर्य-

गतेति ॥ तस्याप्याध्यात्मिकादिरूपत्रयमाह ॥ सूर्य इति ॥ आधिभौतिकं रूपं तस्य सूर्यः । आध्यात्मिकं सुखादिः । रात्रौ सुखाद्यभावाद्भेदसिद्ध्यर्थमाह ॥ क्वचिदिच्छापीति ॥१०४॥१०५॥ ॥१०६॥१०७॥१०८॥

साधनफलाभ्यां निर्णेतुमाहुः ॥ एवमनेकेत्यादि ॥ शेषं स्पष्टम् । अथ कालस्य तद्रूपत्वेऽपि स्वतन्त्रत्वाय लक्षणादिकं वक्तुमाहुः ॥ तस्यैव रूपान्तरमित्यादि ॥ प्रकृतिर्यस्योपादानमाधारः पुरुषः परः * सतोऽभिव्यञ्जकः कालो ब्रह्म तत्त्रितयं त्वहमिति वाक्ये कालस्य ब्रह्मपर्वनाक्षरब्रह्मरूपतोक्ता । द्विधा समभवद् ब्रह्मेत्युपक्रमात् । न तु तदुत्पत्तिः । तेन रूपान्तरं हेतुमिति गमकमित्यर्थः । प्रकृतेरुपादानत्वमुक्त्वा सतोऽभिव्यञ्जकत्वमात्रमुक्तं, तेन निमित्तरूपतया कारणत्वमित्यभिप्रेत्याहुः ॥ सर्वाकारेत्यादि ॥ एवं प्रमाणतो निर्णय उक्तः ॥ १०३ ॥ प्रमेयतो निर्णेतुं तस्य स्वरूपलक्षणमाहुः ॥ तस्येत्यादि ॥ ब्रह्मा तु स्वेच्छयेति ॥ चिदानन्दयोः प्रजापतेरिच्छया । कालः पुरुषोत्तमस्य क्रियाशक्तिरूपः । चेष्टारूपत्वात् । योऽयं कालस्तस्य तेऽव्यक्तबन्धो चेष्टामाहुश्चेष्टते येन विश्वमिति * वाक्यात् । क्रिया च सदंशशक्तिरिति तत्र सुक्ष्चिदानन्दतिरोभाव इत्यर्थः । ननु तिरोभावेऽपि यथा मायाश्यो भूतोद्गमो भूतेभ्यस्तादृशोपगुणोद्गमस्तथा चिदानन्दांशोद्गम स्यात आहुः ॥ तथास्तत्याशमित्यादि ॥ अन्यथा कारणाभावायेति ॥ आनन्दांशाद्गमाभावायेत्यर्थः ॥ सजातीयेत्यादि ॥ प्रकृतितो जडवत् कालाच्चिदंशानन्दयोरुद्गमे कालस्यापि सजातीयतायां तथा स्यादिति तदभावाय तथेत्यर्थः । वस्तुतस्तु सर्वतश्चिदानन्दत्वादपि तत्प्रतीमूलं तु— मन्तश्चिदानन्दायविप्रलब्धात सदंशश्च सर्वतस्तथा प्रकट इत्येवं युज्यते । एवञ्च, स काल इत्यन्तेन स्वपादद्येन स्वरूपलक्षणं कालस्योक्तं भवति । अन्तःप्रकटसच्चिदानन्दो व्यवहारे ईश्वरसत्त्वांशेन प्रकटः काल इति आकाशवारणाया-
* ऽन्तरित्यादि ॥ अक्षरकारणाय व्यवहारस्यादि । कालोऽस्मीति, कालेनाऽव्यक्तमूर्तिनेत्यादिवाक्यानुरोधादि लक्षणम् । अथ गुणव्यतिकराकारो निर्विशेषोऽप्रतिष्ठित इति कार्यानुसारिलक्षणस्यापैमाहुः ॥

तस्य प्रयोजनमित्यारभ्य, प्रलयसिद्धिरित्यन्तेन ॥ तेन सकलोद्भवो नित्यगः कालः । नित्यगः। सकलाश्रयो वा काल इति, लक्षणद्वयं सिद्ध्यति । ईश्वरेच्छापुरुषादिव्यावृत्त्यर्थं, नित्यग इति ॥ इदमेवाप्रतिहितपदेनोक्तम् । नित्यगत्वोपपादनार्थं, सकलेत्यादि यस्मादिति ॥ निमित्तभूतात् ।

तेन सकलोद्भवत्वाभिरक्षिप्रादिव्यवहारहेतुत्वं सकलाश्रयत्वादतीतानागतादिव्यवहारहेतुत्वं च दर्शितम्। इदमेव गुणव्यतिकराकारनिर्विशेषपदाभ्यामुक्तम् ॥ कार्यसिद्धिर्नेति ॥ यथेन च प्रव्यथितं मनो म इत्यादौ तस्य भयजनकत्वोक्तेस्तथेत्यर्थः । उपादानत्वं तु नास्तम् । अत्र प्रकृतेरेव तथात्वेन विवक्षणात् । ईश्वरेण परिच्छिन्नं कालेनाऽव्यक्तिमूर्तिना * इत्यत्र विश्वपरिच्छेदकत्वमीश्वरस्यैवोक्तम्। तद्विवेचयितुमाहुः ॥ कृष्णस्येत्यारभ्यान्तरङ्ग इत्यन्तम् ॥ इदमिति ॥ प्रत्यावकरवरूपम् ॥ सामर्थ्यमिति ॥ प्रभावं पौरुषं प्राहु: कालमेके यतो भयमिति * वाक्ये प्रभावत्वेन कथनात्तथेत्यर्थः । अन्तर्यामिण ईश्वरत्वम्, ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठतीत्यत्रोक्तम्। अन्तरङ्ग इत्यनेन मूलस्थं सर्वान्तरपदं विवृतम् । सर्वापेक्षयाऽन्तर इति समासात् । फलतः साधनतो निर्णेतुमाहुः ॥ अस्य महत्त्वायेत्यादि ॥ अन्यथा करणमिति ॥ उपासकपक्षपातेन भगवद्विसम्मतकरणमित्यर्थः । आध्यात्मिकाधिभौतिकयोः कालयोर्लोकशास्त्रप्रमाणकावाप्याहुः ॥ तस्य परिज्ञानार्थमित्यादि ॥ युगादीति ॥ आदिपदं परमाण्वादिद्विपरार्धान्तकालोपलक्षकम् । परमाण्वादिलक्षणं उ चरमः सद्विशेषाणामित्यादिना तृतीयस्कन्धे निरूपितम् । तत्सुबोधिनीतोऽवगन्तव्यम् । मयाऽपि प्रस्थानरत्नाकरे तद्विमृष्टमिति नेह प्रपञ्च्यते । एवमत्र प्रमाणादिचतुष्टयेन कालस्वरूपं निर्णीतम् ॥ १०४॥ ॥ १०५ ॥ १०६ ॥ १०७ ॥ १०८ ॥

विधिषेधप्रकारेण यः क्रियाशक्तिरुद्गतः ॥
तत्कर्म प्रकटं तावद् यावत् फलसमापनम् ॥१०९॥
तदेकं भगवद्रूपं साधारण्येन सर्वगम् ॥

अग्रपश्चाद्भावभेदात् द्विधा प्रकटमुच्यते ॥ ११० ॥
सृष्टौ साधारणं तद्धि स्वांशेन प्रकटं यथा ॥
कालवत् सकलं रूपमङ्गं तद्वशगं तथा ॥ १११ ॥
इच्छामात्रप्रकटनं सर्वथा तत् तिरोहितम् ॥
सर्वत्रस्त्वाश्रितं पश्चात् स्वभावोऽयं हरेस्तनुः॥ ११२॥

एवं कालं निरूप्य कर्म निरूपयति ॥ विधिषेधप्रकारेणेति ॥ रूपान्तरं तु तस्यैवेत्यनुवर्तते । यथा कालो रूपमक्षरस्य तथा कर्मापि । परमेतावान् विशेषः । कालः स्वत एव प्रकटः, अयं तु पुरुषैर्विधिनिषेधप्रकारेण प्रकटीक्रियते । अतः कालापेक्षया लोकानां हिताहितप्रदाने विशिष्यते । अयं च क्रियारूपः । धर्मिणो धर्मे प्रवेशात् । कालवाच्च स नित्यप्रकटः, किन्तु फलदानपर्यन्तमेवेत्याह ॥ यावत्फलमप्रापनामिति ॥ १०९ ॥ ॥ तस्य प्रतिपुरुषं भेदो भविष्यतीत्याशङ्क्याह ॥ तदेकं भगवद्रूपमिति ॥ व्यापकं तद्रूपं तथापि येन यावद्रूपं विधिप्रकारेण निषेधप्रकारेण वा प्रकटीक्रियते तस्य तावत्फलं दत्वा तदंशेन तिरोभवतीति साधारण्येनापि सर्वसम्भवात्म प्रतिकर्म व्यवस्थेत्यर्थः । तर्हि एकः कथं युगपत्सुखदुःखे प्रयच्छतीत्याशङ्क्याह ॥ अग्रपश्चाद्भावभेदादिति ॥ ॥ ११० ॥ तस्यैकत्वे प्रमाणमाह ॥ सृष्टौ साधारणमिति ॥ कालं कर्म स्वभावं चेति * वाक्यात् ॥ सृष्टिकाले यादृशं रूपं तेन परिच्छेद्यं स एवांशः प्रकटः । अस्यापि चिदानन्दतिरोभावादिः कालवदेवेत्याह ॥ कालवदिति ॥ विशेषमाह ॥ तद्वशगमिति ॥ यत्र यः कालवशो भवति तमेव व्याप्नोति,न त्वन्यमित्यर्थः ॥१११॥

एवं कर्म निरूप्य स्वभावं निरूपयति ॥ इच्छामात्रेति ॥ भ-

गवदिच्छारूपेण प्रकटो भवति, न सच्चिदानन्दरूपेण तस्य स्वरूपं व्यवहारोपयोग्याह ॥ सर्ववस्त्वाश्रितमिति ॥ तद्रूपं जगदाधारं स्वांशभेदेन तत्र तत्र तिष्ठतीति तत्रापि न लीनः । नापि वस्तुनः पश्चाद्भागे तिष्ठति, किन्तु पश्चाद्भागे सर्वं स्थापयित्वा स्वयमेव प्रकटो भवति । यथा स्वभावदुष्टानां ज्ञानादिकं तिरस्कृत्य स्वरूपेण प्रकटः । तदाह ॥ पश्चादिति ॥ एतस्य कार्यवत्स्वरूपं मा भवत्वित्याह ॥ हरेस्तनुरिति ॥ ११२ ॥

कर्म निरूपयतीति ॥ अंशतः प्रमाणानुरोधित्वमंशतस्तदभावं च बोधयितुं तन्निरूपयतीत्यर्थः ॥ अयं त्विति ॥ क्रियाशक्तिर्यस्य तादृशो भगवान् ॥ अत इति ॥ प्रतिपुरुषं तेन तेन प्रकटीभावात् ॥ विशिष्यत इति ॥ असाधारणो भवतीत्यर्थः । एवं साधननिर्णय उक्तः । पूर्वं प्रमाणप्रकरणत्वात् प्रमाणानुरोधि 'कर्मण एव स्वरूपं विवृतं, न सर्वस्येति प्रकृते प्रकरणे प्रमाणाऽननुरोध्यपि निबद्ध्य तत्स्वरूपमाहुः ॥ अथ चेत्यादि ॥ एवं प्रमेयनिर्णय उक्तः ॥ कालवदित्यादि ॥ फलभोगानन्तरं कर्मनाशस्मरणात्तथेत्यर्थः । एतेन फलनिर्णय उक्तः । कर्मणः सकाशान्नश्वरमेव फलमिति । नच 'नित्यकर्मफले व्यभिचारःशङ्क्यः।न च प्रत्नमनन्तरमित्यस्य त्रिदशाऽमरन्यायेन योज्यत्वात् । अन्यथा तादृशकर्माभ्यासोत्तरं चित्तशुद्ध्यभावेऽग्रे ज्ञानोदयविरहप्रसङ्गादिति ॥ १०९ ॥ ॥ तस्येति ॥ उक्तरीत्या असाधारणस्य न प्रतिकर्मश्वयस्येति ॥ ॥ प्रतिपुरुषमदृष्टरूपकर्मभेद इत्यर्थः । तथाऽदृष्टाऽपूर्वादिशब्दैस्तदंश एवोच्यते । प्रारब्धसञ्चितक्रियमाणत्वमेतस्यैवावस्थाभेदेन भवतीति कर्मनानात्वकल्पनमतिगौरवग्रस्तमेवेति भावः ॥ युगपदिति ॥ प्रतिपुरुषभेदेऽप्येककाले ॥ अग्रपश्चाद्भावभेदादिति ॥ येन पुंसा यस्मिन् काले विधिप्रकारेण प्रकटितस्तस्मिन्नेव काले तदितरेण पुंसा निषेधप्रकारेण प्रकटीक्रियत इति प्रकारस्याग्रपश्चाद्भावभेदादेकस्मिन्नेव काले द्विधाप्रकटः सन् तस्य तस्य युगपदेव तत्तत्प्रयच्छतीत्यर्थः ॥ ११० ॥ ॥ तस्येति ॥ साधनस्वरूपफलैरेवमुपपाद्यमानस्य । नचैकत्वं प्रदृष्टत्वपदविवक्षितमिति वाच्यम् ।

त्यादि ॥ यथा कालोऽतीतानागतचिरक्षिप्रादिव्यवहारसाधकतया निराधार एव व्यवहारोपयोगी, यथा च कर्म प्रतिनियतभोगसाधकतया चेतनाधारमेव व्यवहारोपयोगि, तथा स्वभावः कथमुपयुज्यत इत्याकाङ्क्षायामाहेत्यर्थः ॥ जगदाधारमिति ॥ चेतनाचेतनवस्त्वाधारमित्यर्थः ॥ स्वरूपेण प्रकट इति ॥ तादृशानां स्वरूपे दृष्टमात्र एव दुष्टोऽयमित्यादिप्रतीत्युदयात्तयेत्यर्थः ॥ पश्चादिति ॥ क्रियाविशेषणमेतत् । तथा च सर्ववस्तु पश्चाद्यथा स्यात्तथा सर्ववस्तुष्वाश्रितमित्यर्थः । एवं प्रमेयाद्वैतनिर्णय उक्तः ॥ एतस्येति ॥ सकलजगदाश्रितत्वेन प्रतिपाद्यमानस्य ॥ ११२ ॥

वस्तूद्गमतिरोभावैस्तथा सत्त्वादिभिः पुनः ॥
परिणामस्तु तत्कार्यं सर्वानुभवसाक्षिकम् ॥ ११३ ॥
सामान्यतो विशेषेण न प्रकाशः कदाचन ॥
एवं कालस्तथा कर्म स्वभावो हरिरेव सः ॥ ११४ ॥
अतस्तदुद्गमः शास्त्रे न कदाचिदुदाहृतः ॥
सर्वसाधारणत्वेन न तत्तत्त्वं तदेव तत् ॥ ११५ ॥

अस्याविर्भावनिरोभावयोरुपपत्तिमाह ॥ वस्तूद्गमेति ॥ अस्योद्गमतिरोभावयोर्वस्तु नियामकम् । तथा सत्त्वादिगुणाः । ज्ञानं कर्म च । अतो बहुधोद्गमः । तस्य द्रव्याविर्भावेणाप्याविर्भावः । विरोधिगुणप्रादुर्भावे पूर्वस्वभावो निवर्तते । अन्यश्चोदेति । तथा मन्त्रशास्त्रादिभिरपि । अतो बहुधोद्गमतिरोभावौ । तस्य सद्भावेऽर्थापत्तिं प्रमाणयति ॥ परिणामस्त्विति ॥ स्वभावस्य परिणाम एव कार्यम् । अतः स्वभावः सर्वदा अनुमानगम्यो, न कदाचिदपि प्रत्यक्ष इत्याह ॥ सामान्यत इति ॥ उपसंहरति

एवमिति ॥ तत्त्वाधिक्यपरिहारायाह ॥ हरिरेव स इति ॥ स कालादिर्हरिरेव । तत्रोपपत्तिमाह ॥ अतस्तदुद्गम इति ॥ शास्त्रे भागवते । तथापि कारणत्वात् तत्त्वता भविष्यतीत्याशङ्क्याह ॥ सर्वसाधारणत्वेनेति ॥ यथा भगवान् सर्वसाधारणत्वान्न तत्त्वकोटौ प्रविशति, तथा कालादिरपि । भगवत्त्वेनैवोपपत्तौ न पृथक्त्वम् ॥ ११३ ॥ ११४ ॥ ११५ ॥

अतो यदुद्योऽयम् इत्यादि ॥ एतेन साधनमुक्तः ॥ अर्थापत्तिं प्रमाणयतीति ॥ फलाविर्णयं यत्तु तां प्रमाणयतीत्यर्थः । एवञ्च परिणामहेतुः पदार्थः स्वभाव इति तल्लक्षणं कार्यमुखेन कलाति ॥ उपसंहरतीति ॥ एवमक्षरादुपपत्त्यारोऽपां उक्तानेतां तत्त्वत्वं वारयितुमुपसंहरतीत्यर्थः ॥ तत्रेति ॥ हरिरेवे ॥ उद्गम इति ॥ अक्षरणादिरूपा उत्पत्तिः ॥ कालादिरिति ॥ अक्षरस्य भगवद्धर्मित्वेन स्वस्वरूपाभावात् कालादीनामेवात्र ग्रहणम् ॥ ११३ ॥ ११४ ॥ ११५ ॥

एवं भावान्तरस्य तत्त्वताया निवारणेऽप्यभावस्य भविष्यतीत्याशङ्कां वारयितुमाह ॥

अभावः कारणं चात्र ध्वंसश्चापि तदुच्यते ॥
कार्यादिशब्दवत् तस्मिन् सापेक्षा वृत्तिरेतयोः ॥
अपृथग्विद्यमानत्वान्न धर्मैरधिको गणः ॥ ११६ ॥

प्रागभावस्य कारणत्वात् तत्त्वता भविष्यतीत्याशङ्क्याह ॥ अभावः कारणं चात्रेति ॥ प्रागभावः कारणाऽवस्थातो नातिरिच्यते । तस्य भिन्नकारणत्वकल्पनायां प्रमाणाभावात् । अग्रिमजननज्ञानेनैव तस्यानुभवः । अन्यथाऽत्यन्ताभाव एव स्यात् । तस्मात् पूर्वभावस्तस्य न कारणम् । न हि तेन कोऽपि व्यापारः क्रियते । कार्येण परं निवर्त्यते । प्रसङ्गाद् ध्वंसादीनामपि कार-

णत्वं निराकर्त्तुमाह ॥ ध्वंसश्चापीति ॥ ध्वंसोऽपि दण्डादिस्वरूपमेव ॥ तिरोभावशब्दसातिरिक्तस्य ध्वंसस्य निरूपयितुमशक्यत्वात् । तेन रूपान्तरं पश्यन् पूर्वरूपस्य तिरोभावं मन्यते ध्वस्त इति ॥

ननु कारणाऽतिरिक्तरूपाभावे प्रागभावादिशब्दप्रयोगः कथमितिचेत्तत्राह ॥ कार्यादिशब्दवदिति ॥ न हि घटरूपादतिरिक्ता कार्यता । तथा दण्डरूपादपि नातिरिक्ता कारणता । तथापि तयोर्यथा कार्यकारणप्रयोगस्तथा प्रागभावादिप्रयोगोऽपि । ननु संख्यादयो गुणाः सामान्यादयश्च सन्ति । ततः कथमष्टाविंशतितत्त्वानि । तत्राह ॥ अपृथग्विद्यमानत्वादिति ॥ १२६ ॥

प्रागभावस्येत्यादि ॥ कारणत्वादिति ॥ असाधारणकारणत्वात् । मूलस्थमभावपदं व्याकुर्वन्ति ॥ प्रागभाव इति ॥ ननु घटत्वेन कपालत्वेन सामान्यकार्यकारणभावे सत्यप्येतेभ्य कपालेभ्य एतद्घटोत्पत्तौ कपालत्वेन नियमासम्भवादेतत्कपालत्वेन नियमाङ्गीकारे च विनिगमनाविरहाद् बहुकपालजे घटे गौरवप्रसाच्च तद्देशनियामकतया प्रागभावसिद्धिः सांप्रदायिकाक्षपादीयैः क्रियते । तथाच येषु कपालेषु यद्घटप्रागभावः स एव घटस्तत्रोत्पद्यते इति तस्य कारणेऽन्तर्भावो न वक्तुं शक्यत इत्यत आहुः ॥ प्रागभाव इत्यादि ॥ यत्र कपालानि सिद्धानि घटश्च श्वो भावी तत्र सत्यामपि कारणतायां सति च प्रागभावे कारणान्तरेषु च सत्सु स कालो नास्तीत्यऽवश्य वाच्यम् । स च कालः साधारणोऽपि स्वयं भवंस्तत्फलजननाय फलानुकूलत्वरूपमेकं सकलतत्समवायिकारणगतमवस्थाविशेष सम्पादयतीत्यवश्यमभ्युपेयम् । अन्यथा द्वयो भावी पदार्थोऽद्य स्यात् । श्वो भावीति व्यवहारश्च बाध्येत । एवं सति सकलकारणवृत्त्येकयाऽवस्थया निर्वाहे सकलकपालवृत्त्येकातिरिक्तप्रागभावकल्पना प्रमाणरहितैवेति । अवस्था च स्वरूपातिरेकेण नानुभूयत इति तादृशावस्थाविशिष्टं कारणमेव स इत्यर्थः । नच प्रागभावानङ्गीकारे उत्पत्त्यनन्तरं पुनरुत्पत्तिप्रसङ्ग इति वाच्यम् । तदवस्थातिरोभावेनैव निर्वाहात् । नचेह कपाले घटो नास्तीति प्रतीतिस्तत्र

मानत्वात्तस्या घटत्वावच्छिन्नप्रतियोगिताकाभावविषयतया सामान्यरूपेण प्रागभावाख्यविशेषानवगाहित्वात् । न च प्रागभावः सामान्य एवेति वाच्यम् । तस्य विनाशित्वेन यत्किञ्चित्प्रतियोग्युत्पत्तावपि तत्प्रागसत्त्वे इदानीमत्र कपाले घटो नास्तीति प्रतीतिबाधापत्तेः । न च सकलप्रतियोग्युत्पत्तिनाश्यः स इति वाच्यम् । तथा सत्येकस्मिन् घटे उत्पन्नेऽपि तत्प्रागभावानाशादुत्पत्स्यति कार्ये तदवयवत्वेन प्रतीयमानेषु कपालेष्वपि घटो नास्तीति प्रतीतिः स्यात् । प्रागभावप्रतियोगितावच्छेदकत्व स्थितौ च तस्य नित्यत्वापातः स्यादिति न किञ्चिदेतत् । न च यत्र पक्वे घटे स्पर्शरूपरसगन्धानां पाकजानामुत्पत्तिस्तत्र प्रागभावं विना कथं निर्वाह इति वाच्यम् । पक्वेऽप्यपक्वस्य रूपचतुष्टयोत्पत्तौ बाधकाभावात् । परिणामस्य स्वभावकार्यत्वात् । तस्य च कार्यकोटिमत्त्वात् । सत्कार्यवादे कारण एव सर्वासामपि सत्त्वाङ्गीकारात् । अतो नैवमपि प्रागभावसिद्धिः । ननु प्रागभावानङ्गीकारे कारणशरीरे प्रविष्टस्य पूर्ववर्तित्वांशस्य कथं ग्रहः । तस्य प्रागभावावच्छिन्नसमयवर्तित्वरूपत्वात् । तस्य च प्रागभावग्रहाधीनत्वादिति चेन्न । कार्यविषयकाभिमतसमयज्ञानेनैव तद्ग्रहसम्भवात् । अन्यथा प्रागभावस्यापि कारणत्वेन तन्निष्ठपूर्ववर्तित्वस्यापि प्रागभावघटिततया तद्ग्रहे आत्माश्रयेण प्रागभावीयकारणताया एवातिदुर्ग्रहत्वापातात् । प्रागभावस्य कारणावच्छेदकत्वेन तदनङ्गीकारे तद्ग्रहेण प्रागभावस्याप्यग्रहापाताच्च । न हि घटजननानुकूलकारणावस्थामपश्यतः कस्यापि इह घटो भविष्यति, इदानीमत्र घटप्रागभाव इति बुद्धिरुदेति । अभ्यासपाटवादुदेतीति चेत् । न तथा सति कारणादर्शनेऽपि तदुदयापत्तेः । अभ्यासपाटवादेव प्रागभावोदासीनानां पूर्ववर्तित्वांशग्रहणस्याप्युपपत्तेश्च, कार्यपर्यन्तत्वावच्छिन्नसमयपूर्ववर्तित्वस्यैव पूर्ववर्तित्वात् । अभिमतजननानन्तर्यस्य कालधर्मस्यैव च प्रथमपदार्थत्वात् । किञ्च कारणताघटकपूर्ववर्तित्वशरीरप्रविष्टस्यास्य कारणत्वे उच्यमाने तत्रान्यस्य प्रवेशाच्चक्रकापत्तिः । एतत् सर्वमभिसन्धायाहुः ॥ अभिमतेत्यादि ॥ अन्वयेति ॥ प्रागंशस्यानवगाह इत्यर्थः । कल्पितमाहुः ॥ तस्मादित्यादि ॥ प्रागंशोदासीनाभावमात्रस्यानन्त्याभावविषयत्वात् कारणावस्थामपश्यतस्तूष्णीं प्रतीयमानो योऽभावः स कारणरूपो न-

ऽर्थः। ननु प्रागभावोऽत्यन्ताभावाद्भिन्नः, कारणावस्थारूपत्वात्। ध्वंसाच्च भिन्नः प्रतियोग्युत्पत्तिनाश्यत्वात्। भेदादपि भिन्नः, संसर्गाभावरूपत्वादित्येवमभावान्तराद्भेदे साधिते अभावत्वेन प्रत्ययाद्भावेभ्योऽतिरिक्तः प्रागभाव एव सेत्स्यति। एवञ्च सिद्धे प्रागभावे कारणलक्षणसमन्वयात् कुतो न तस्य कारणत्वमिति चेन्न। केवलप्रत्ययात्तदसिद्धेरितरभेदपूर्वकसिद्धौ च कारणावस्थासमनियतस्य तदतिरेकासिद्धेः। सिद्धौ वा सामयिकत्वेन सिद्ध्याऽनादित्वाभावेन अव्यभिचारितरूपस्य तस्यासिद्धेः। तथाभूतस्य कारणताग्रहणे च फलापत्तेश्च। ननु गन्धाद्यनधिकरणकालवृत्त्यभावत्वस्याऽऽद्यत्वावच्छिन्नानधिकरणकालवृत्त्यभावत्वस्य च प्रागभावध्वंसरूपत्वाभेदे दूषणमिति चेन्न। तयोस्तथात्वे मानाभावात्। प्रलयदशायां द्रष्टुः कस्याप्यभावात्। ईश्वरः पश्यतीति चेत्। तर्हि तमेव पृच्छ, तज्ज्ञाश्चैव मंस्यामो, न भवद्वाचेति दिक्। एवञ्चाव्याप्यवृत्तिसंयोगादेस्तदवच्छेदेनोत्पत्तिरपि स्वारम्भकावयवकलापादेव। आत्मादावपि ज्ञानाद्युत्पत्तेः प्राक् प्रागभावो नास्त्येव। अन्यथा प्रतीयेतैव। प्रतीयमानस्त्वत्यन्ताभाव एव। प्रागज्ञानवगाहादित्युक्तत्वात्। ध्वंसप्रागभावाधिकरणे नात्यन्ताभाव इति तु प्रवादमात्रमिति। औदासीन्येन प्रतीयमानस्याकारणत्वे गमकमाहुः॥ न हीत्यादि॥ तथात्वासाधारणकारणत्वेनाभ्युपगम्यमानस्य तस्य व्यापाराभावात् कारणता नाङ्गीकर्तुं शक्याऽव्यापारातिरिक्तस्य व्यापारवत एवाऽसाधारणकारणत्वदर्शनात्, व्यापाराभावे च तस्य सत्ताया एव दुरधिगमत्वाद् दूरापेता कारणतेत्यर्थः। कार्यनाश्यत्वादपि न कारणतेत्याहुः॥ कार्येणेत्यादि॥ कार्येण भावकारणध्वंस एव लोके क्वचिद् दृष्टोऽश्वतर्यादिगर्भनिष्क्रमणादौ, न त्वभावरूपस्यापि कारणस्य। अन्यथा प्रतिबन्धकध्वंसात्यन्ताभावाभ्यामपि दाहो जायते इति दाहेनापि कश्चित्तयोर्नाशो दृश्येत। अभ्युपगमसिद्धस्य युक्तिमूलत्व एव निर्वाहात्। नच प्रत्यक्षमेव तत्र मानं, न युक्तिरिति वाच्यम्। तस्य विप्रतिपन्नत्वेन तद्विषयकप्रत्यक्षस्यैवाभ्युपगन्तुमशक्यत्वादिति न किञ्चिदेतदित्यर्थः। ननु मास्तु प्रागभावोऽतिरिक्तस्तथापि पूर्वकल्पप्रलयकाले उत्तरसृष्ट्यभावावद् ध्वंसे च तदुत्पत्तेरुत्तरसृष्टिं प्रति पूर्वप्रलयध्वंसस्य पूर्वसृष्टिध्वंसस्यैव वा प्रतिबन्धकध्वंसत्वेन रूपेण

अधिकसंख्याको नेत्यर्थः । अत्रेदं हृदयम् । संख्यापरिमाणपृथक्त्वविभागपरत्वापरत्वबुद्धीच्छाप्रयत्नसंस्काराऽदृष्टसुखदुःखद्वेषगुरुत्वद्रवत्वस्नेहानां यथासम्भवं तत्त्वान्यादावेवान्वयव्यतिरेकग्रहणात् सामान्यस्य च तत्त्वसहभावेनैव पूर्ववर्तित्वग्रहणादन्यथासिद्धत्वेन संयोगस्य च स्पर्शेऽन्तर्भूतत्वेन कारणरूपतया पृथग्भूतत्वं नेति बोध्यम् । वस्तुतस्तु सामान्यादेरभाव एवासृष्टयारम्भसमये ब्रह्मणोऽद्वितीयत्वात्, यद्वा स्यामितीच्छोत्तरमपि जातिव्यक्तिविभागोऽयं यथा वस्तुनि कल्पित * इति षष्ठस्कन्धवाक्यात् सामान्यस्य कल्पनैककारणत्वमेव । तस्मान्नैयायिकाद्युपगतपदार्थानां श्रुतिपुराणविरोधे लौकिकयुक्तियुक्तत्वे च कार्यकोटावेव निवेश इति भावः । एवं कारणरूपस्य प्रमेयस्य स्वरूपप्रमाणसाधनफलैरष्टाविंशतितत्त्वात्मकत्वमेवेति निर्णय उक्तः ॥ ११६ ॥

अतः परं कार्यस्यानन्त्येऽप्येवं निर्णयं वक्तुं प्रथमतः स्वरूपतोऽवगमार्थं प्रयतमाना आहुः ।

आनन्त्येऽपि हि कार्याणां गणभेदो द्विधा मतः ॥
समष्टिव्यष्टिभेदेन केवले जडजीवता ॥ ११७ ॥
सर्वेषां त्रिगुणत्वाद्धि त्रयो भेदाः पृथङ्मताः ।
आधिदैवकमध्यात्ममधिभूतमिति स्मृताः ॥
सच्चिदानन्दरूपेण देहजीवेशरूपिणः ॥ ११८ ॥

एवं कारणं निरूप्य कार्यज्ञानार्थं तस्यावान्तरभेदानाह ॥ *आनन्त्येऽपीति* ॥ यद्यपि प्रत्यक्षादिप्रकारेण ज्ञानमशक्यम्, तथापि सर्वं कार्यं राशिद्वयात्मकं, समष्टिरूपं व्यष्टिरूपं च । तच्च जीवजडात्मकम् । नानन्दांशस्तत्र प्रविशति । अतः केवलप्रकारेण विभागे क्रियमाणे जडो जीवश्च भवति, न तु ततोऽतिरिक्तं किञ्चित् ॥ ११७ ॥ कार्ये त्रैविध्यं निरूपयितुमाह ॥ सर्वेषामिति ॥

कार्येत्यादि । एवं प्रमेयज्ञानार्थं कार्यद्वैराश्यं निरूप्य तदुपलक्षणार्थं कार्यत्रैविध्यं निरूपयितुं स्वरूपत्रैविध्यमन्तरेण कारणत्रैविध्याभावात्तदभावे च कार्यस्यापि त्रैविध्याभावात्तन्निरूपयितुमाह—कारणे स्वरूपं च त्रैविध्यमाहेत्यर्थः ॥ सर्वेषामिति ॥ हीति निश्चये । सर्वेषां कार्याणां त्रिगुणत्वाज्ज्ञापकाद्धेतोः श्रुताः, अथाधिदैवमथाध्यात्ममथाधिभूतमित्यादिश्रुत्युक्ता आधिदैविकादयस्त्रयो भेदाः पृथक्प्रत्येकं कारणे स्वरूपे च मता इति योजना । श्रुता इत्यनेन त्रैविध्योक्तौ प्रमाणं दर्शितम् । ननु गुणत्रैविध्येन सर्वत्रैविध्यानुमाने, तद् गुणत्रैविध्यमेव कुत इत्यत आहुः ॥ गुणानामित्यादि ॥ अत्र इति ॥ सच्चिदानन्दरूपेणेत्यनेनेत्यर्थः । इदं च, सत्त्वं रजस्तम इति निर्गुणस्य गुणा * इत्यस्य सुबोधिन्यां स्फुटम् । सदंशान्निर्गतं सत्त्वमुच्यते, चिदंशाद्रजः, आनन्दांशाच्च तम इति विवरणात् । भेदानिति ॥ त्रैविध्यप्रयोजकान् । भेदानां स्वरूपं व्याकर्तुं तदभिधायकपदप्रकृतिपदानि व्याकुर्वन्ति ॥ अधीत्यादि ॥ तेन द्वेधपदस्यार्थद्वय विवाक्षतम् ॥ अनयोरित्यादि ॥ स्वतन्त्राभिमन्त्रोरधिष्ठात्रभिमन्त्रोर्वा मध्येऽभिसम्भवन्ति । स्वतन्त्राभिमन्तृत्वादिरूपवच्छेदको यो भवति सोऽधिभूत इत्यर्थः । तदुक्तं द्वितीयस्कन्धे । आध्यात्मिकस्तु यः प्रोक्तः सोऽसावेवाधिदैविकः * यस्तत्रोभयविच्छेदः स स्मृतो ह्याधिभौतिक इति । उभयोर्विच्छेदो यस्मादित्युभयविच्छेद इत्यर्थः । तदनुप्रविश्य सच्च त्यच्चाभवदिति पुरप्रवेशोत्तरमेकस्यैव जीवान्तर्यामिभावपक्षे सदंशेन शरीरेणैव तथात्वव्यवच्छेदः क्रियत इति तदुभयविच्छेदकोंऽशो देहादिरूपोऽधिभूत इति । एतेषां चाधिदैविकाधिदैवादिशब्दानां व्युत्पत्तिपक्षमादाय कश्चिदर्थभेदेऽपि तत्र तत्र पर्यायतया एव प्रसिद्धेः प्रकृते ऐकार्थ्यमेवेत्यभिप्रेत्य मूल, आधिदैविकमध्यात्ममधिभूतमित्युक्तम् ॥ त्रयाणामित्यादि ॥ जडजीवयोरिव त्रयाणां स्वातन्त्र्याभिमानाभयविच्छेदे. कार्यैः सिद्धे भेदे स्वरूपमपि भिद्येतेत्याकाङ्क्षायामभेदायाहेत्यर्थ. ॥ सच्चिदानन्देत्यादि ॥ तथाचैकस्यैव पुंसः पाचकपाठकपालकत्ववदेकस्यैव सच्चिदानन्दरूपस्य ब्रह्मणो धर्मरूपसदादिपुरस्कारेण कार्यभेदे आधिभौतिकादिशब्दवाच्यत्वाच्च स्वरूपतो भेद इत्यर्थः ॥ उदाहरणमाहुरिति ॥ एतत्परिचायनायोदाहरणमाहेत्यर्थः ॥ देहेत्यादि ॥ इदं च द्वितीयस्कन्धे, एको

भावः । ननु जन्यत्वेऽपि घटादिवद् भगवत्त्वसिद्धेरभगवत्त्वक-
धर्मं नातीवोपयुज्यते इत्यत आहुः ॥ अत इत्यादि ॥ पदानामिति मू-
लं व्याकुर्वन्ति ॥ संसर्गेत्यादि ॥ हेतुरिति ॥ उभयोः कल्पितत्वे हेतु-
रित्यर्थः ॥ कालिदासेत्यादि ॥ एवमर्थसहितयोर्वैदिकलौकिकवाक्य-
वैजात्यम् उपपाद्य मतान्तरवैलक्षण्यार्थं प्रसङ्गाल्लौकिकवाक्यानां
स्थितिप्रकारमाहुरित्यर्थः ॥ सर्वप्रतीतीत्यादि ॥ तथाच यावज्ज्ञानं तस्य
स्थितिरित्यर्थः । कथमेवमित्यत आहुः ॥ रूपेत्यादि ॥ रूपध्वंसे सत्यपि
ज्ञाने पदार्थनाशदर्शनाद्धामध्वंसे च तद्वैलक्षण्यात्तथेत्यर्थः ॥ १५८ ॥
॥ १५९ ॥ किमत्र बीजमित्याकाङ्क्षायामाहुः ॥ तत्र हेतुरित्यादि ॥ त-
था वाक्यत्वनिष्पत्तेरिति ॥ तथाच बुद्ध्या रचनां कृत्वोच्चारयतीति
बुद्धिकृतरचनाप्रकारेण पदानां वाक्यत्वनिष्पत्तेः पदानि बुद्ध्यैव
लौकिकवाक्यरूपाणि जायन्त इति तन्नाशे वाक्यनाशोऽप्युपचर्यते
इति बुद्ध्यैव स्थितिरिति युक्तमेवेति भावः । ननु वाक्यरूपशब्दानां
त्रिक्षणावस्थायित्वाङ्गीकारे को दोषो येन तन्नाद्रियत इत्यत आहुः ॥
यथेत्यादि ॥ लोके वेदे च महद् दूषणमिति । लोके राजकीय-
वार्त्तयोक्तौ तद्वाक्यमनुकरोतीति व्यवहारापत्तिस्तेनानुकरणेन राज-
दण्डापत्तिर्वृतानां भङ्गत्वापत्तिश्चेत्यादि । वेदे च यज्ञाङ्गमन्त्रैः
प्रैषादौ च तत्तत्फलानातिप्रसङ्गश्चेत्यप्यूह्यम् । नच वेदे तादृशानु-
पूर्व्येव फलसिद्धिरिति वाच्यम् । मानाभावात् । अनेकशब्दकल्पना-
गौरवप्रसङ्गाच्चेति ॥ तद्वेति ॥ उत्पत्तिस्थितिप्रकारं चेत्यर्थः ॥
१६० ॥ ॥ विवाद इति ॥ लौकिकवैदिकवाक्ययोस्तुल्यं प्रामाण्यं,
प्रबलनिर्बलभावो वेति विप्रतिपत्तिजन्यः स इत्यर्थः ॥ तद्वदिति ॥
अप्रामाण्यहेतून् पुरुषदोषानित्यर्थः ।
विप्रलिप्सादयस्तु, विप्रलिप्साभ्रमप्रमादकरणापाटवाद्याः। तत्रान्यथा
ज्ञात्वा परप्रतारणायान्यथा कथनेच्छा विप्रलिप्सा। भ्रमोऽतद्वति तद-
वगाहि ज्ञानम् । प्रमादोऽन्यमनस्कत्वम् । संश्लिष्टवाक्त्वं करणापा-
टवम् । एवमन्येऽप्यूह्याः । तेषां संग्रहायाहुः ॥ यत्रेत्यादि ॥ ननु लो-
केऽपि विप्रलिप्सादिमूलस्यैव वाक्यस्याप्रामाण्यं सर्वसंमतं, न तु
निर्दुष्टवक्तृकस्यापीति कथं सर्वस्याप्रामाण्यमित्यत आहुः ॥ व्यवहार
इत्यादि ॥ ततोऽपि भ्रान्त इति ॥ सन्निपातकार्यत्वेन भ्रान्तोऽपि विप्र-
लिप्सादिमूलकत्वादत्यन्तं भ्रान्त इत्यर्थः । तद्विशदीकुर्वन्ति ॥ प्र-

माण इत्यादि ॥ बौद्धादिवाक्ये भ्रान्तप्रतारकवाक्ये च लौकिकानां प्रामाण्याभिमानात् तथेत्यर्थः ॥ प्रयोजनमाहेति ॥ अस्य प्रासङ्गिकत्वपरिहारायाहेत्यर्थः। एतेन पूर्वोक्तं वेदस्य प्रामाण्यं प्रमेयविचारेण साधितम् ॥ १६१ ॥

वेदे सर्वत्र नाधिक्यं वाक्ये न न्यूनताऽपि वा ॥
अतो न वाक्यभेदः स्याल्लोके तत्रैव दूषणम् ॥१६२॥
भूतसूक्ष्मो ध्वनिर्वर्णो नामसृष्टौ निरूप्यते ॥
प्रकृतिप्रत्ययौ लोके व्युत्पत्त्यर्थं निरूपितौ ॥१६३॥
नैतावता कृत्रिमत्वं शब्दे वक्तुं हि शक्यते ॥
प्रपञ्चभेदात् तत्त्वानामाधिक्यं वर्णतो न हि ॥१६४॥
संस्कारमात्रविलयादथ वा तद्विलीनता ॥
तदभावाद्वासुदेवे तच्छब्देषु न लीनता ॥ १६५ ॥
अस्मदादिमुखेनापि क्रीडार्थं सर्वतो हरिः ॥
शब्दभेदं वितनुते रूपेष्विव विनिश्चयः ॥ १६६ ॥

ननु वेदेऽपि दोषसम्भवाद् विचारेण तथा क्रियत इत्याशङ्क्याह ॥ वेदे सर्वत्र नाधिक्यमिति ॥ अन्येषामपि वादिनां वेदे नान्ये दोषाः, किन्त्वाधिक्यन्यूनते । सृष्ट्याद्यर्थवादा अधिकाः । मायानिरूपणाभावश्च न्यूनः । तदुभयं वेदे नास्ति । अतः पदपरित्यागेनाधिकमेलनेन वा न वेदार्थो वक्तव्यः । अतो वेदवाक्यभेदाः अप्रामाणिकाः । लोके तु तत्र दूषणम् । लौकिकानां बहुदोषग्रस्तत्वात् ॥ १६२ ॥ ननु वर्णैर्नियैस्तत्त्वाधिक्यं कुतो न भवतीत्याशङ्क्याह ॥ भूतसूक्ष्म इति ॥ शब्दतन्मात्रारूपो ध्वनिः । वर्णस्तु नामसृष्टौ । उभयत्रापि शब्दपदप्रयोगः परम् । अतः सृष्टि-

भेदाभ्याधिक्यम् । ननु पदानां कथं नित्यता । प्रकृतिप्रत्ययविभागस्य निरूपितत्वादित्याशङ्क्याह ॥ प्रकृतीति ॥ ज्ञानार्थमेव विभागं कल्पयित्वा निरूपिता, न तु तयोर्विभागो वस्तुतः ॥ १६३ ॥ ॥ १६४ ॥ लौकिकवाक्यानां लयप्रकारमाह ॥ संस्कारमात्रविलयादिति ॥ वस्तुतस्तु न विलयः । अथवा विलयाङ्गीकारश्चेत्संस्कारमात्रविलयात्तद्विलीनतेत्यर्थः ॥ अयमपि पक्षो भगवद्वाक्येषु नास्तीत्याह ॥ तद्भावादिति ॥ ऋषीणां संस्कारस्य महाप्रलयपर्यन्तमवस्थानात् । एवं व्यवहारमाश्रित्यात्रान्तरभेदः शब्देषु निरूपितः ।

वस्तुतस्तु सर्वं वेदतुल्यमित्याह ॥ अस्मदादिमुखेनापीति ॥ सर्वं वाक्यं भगवत्कर्तृकमेव ॥ १६५ ॥ १६६ ॥

नन्वित्यादि ॥ ब्रह्मवादे वेदस्येश्वरकर्तृकत्वात् पुरुषदोषस्तत्रापि सम्भवदुक्तिक इति तथा क्रियते । यद्यदंशे निर्दोषता तस्य वेद्यात्रिपते । अतः पूर्वोक्तमनुपपन्नमित्याशङ्क्याहेत्यर्थः ॥ वेदेत्यादि ॥ तथाच वाक्यभेदस्य वैदिकैर्दूषणत्वाभ्युपगमात् तथा निश्चीयते । तत्र पौरुषेयत्वस्यैव दूषकताबीजत्वात् तेषां दोषवत्त्वस्य सम्भावितत्वात् । ननु वाक्यभेदस्य लोकेऽपि दूषणत्वाङ्गीकारादिदं निश्चायकमित्यत आहुः ॥ लोक इत्यादि ॥ १६२ ॥ सिद्धान्तलोकेन कार-
[illegible]

कत्वाच्च शब्दतत्त्वेऽस्मान्तर्भावोऽस्तो न तौ मुधेति भावः । एवं प्रासङ्गिकं परिहृत्य, वर्णनित्यत्वस्य जैमिन्युपवर्षादिसंमतत्वात् पदनित्यतामाक्षिपन्ति ॥ नन्वित्यादि ॥ समाद्धते ॥ प्रकृतीत्यादि ॥ अव्युत्पत्तिपक्षस्य सूत्रकाराभिमतत्वात्तथा निश्चीयत इति भावः ॥ १६३ ॥ १६४ ॥ ॥ लौकिकेत्यादि ॥ एवं पदानां नित्यत्वं साधयित्वा लौकिकवाक्यस्यानित्यत्वपक्षे तन्नाशो आवश्यक इत्यतस्तेषां लयप्रकार-

माहेत्यर्थः । तत्र ब्रह्मवादं व्यवहारं चाश्रित्य पक्षद्वयमाहुः ॥ वस्तुत इत्यादि ॥ संस्कारस्तु ज्ञानस्य वृत्तेर्वा सूक्ष्मावस्थेति वाक्यविषयकसंस्कारनाशे वाक्यबुद्ध्यास्फुरणात्तन्नाशः उपचर्यत इत्यर्थः । तर्हि व्यवहारे लौकिकस्य वेदात् को विशेष इत्यत आहुः ॥ अयमपीत्यादि ॥ ननु तथापि न विशेषे भगवज्ज्ञानस्य नित्यत्वेन लौकिकवाक्यविषयकस्यापि तस्यानाशादिति शङ्कायामाहुः ॥ ऋषीणामित्यादि ॥ तथाचान्यविषयकः संस्कार ऋषीणां न तिष्ठतीति तथेत्यर्थः । ब्रह्मवादसिद्धान्तं वक्तुमाहुः ॥ वयमित्यादि ॥ अतो विद्वत्तायां सर्वं नित्यमेव प्रमाणमेवेत्यर्थः । एतेन, अथवा सर्वरूपत्वादिति पूर्वोक्तं समर्थितं ज्ञेयम् ॥ १६५ ॥ १६६ ॥

वाक्यार्थयोग्यावयवैर्वाक्यं सर्वत्र सम्मतम् ॥
आकाङ्क्षा योग्यताऽऽसत्तिः पदे तस्मादुदीरिता॥ १६७॥
मृदा घोटकनिर्माणे न शृङ्गकरणं मतम् ॥
तथा युक्तार्थबोधाय नाऽऽकाङ्क्षारहितं पदम् ॥१६८॥
अर्थद्वारा पदे धर्मा लोकदृष्ट्यैव कल्पिताः ॥
तस्माद्वाक्यं सर्वमेव सा यतो विश्वतोमुखी ॥१६९॥
पदद्वयं सुप्तिङन्तं ताभ्यां चलति वाक्पतिः ॥
पदानि बहुशः सन्ति सुप्तिङ्मध्यविभेदतः ॥१७०॥
तत्रासकारत्वादि ते भिन्ना अंशतः परे ॥
तदुदाहरणे श्लेषस्तत्र योगादिकल्पना ॥ १७१ ॥
फलार्थं लक्षणा प्रोक्ता गौणी चाप्युपचारतः ॥
प्राकट्यपक्तिरोधानतिरोधानैर्हरिर्बभौ ॥ १७२ ॥
प्रवर्त्तकत्वं कृष्णस्य, न विध्यर्थस्य कर्हिचित् ॥

कार्यतादिपरिज्ञानमुत्थाप्यैव प्रवर्त्तयेत् ॥ १७३ ॥
अनिष्टमिष्टं साध्यं वा नासाध्यं किञ्चिदस्ति हि ॥
तथापि यतते कश्चित् क्वचिदेव हरीच्छया ॥ १७४ ॥

नन्वेवं सति किञ्चिद् वाक्यं युक्तं, किञ्चिदयुक्तम् । तत्र चाकाङ्क्षादयो धर्मा इति कल्पना कथमुपपद्यत इत्याशङ्क्याह ॥ वाक्यार्थयोग्यावयवैरिति ॥ रूपस्रष्टाविव नामस्रष्टाऽपि योग्याऽवयवैरेव पदार्थनिर्माणम् । तावतैव ते धर्मा अङ्गभावं प्राप्नुवन्ति । एषाऽपि कल्पनैवेत्यर्थः ॥ १६७ ॥ तदेव साधयति ॥ मृदाद्येष्टकनिर्माण इति ॥ यथा यथर्षीणां पुरातनानि वाक्यानि तथाऽऽधुनिकानामपि । अन्यथा वाक्यार्थप्रतीतिर्न स्यात् । न त्वऽपूर्वपदार्थः कश्चित्कल्प्यते ॥ १६८ ॥ उपसंहरति ॥ अर्थद्वारेति ॥ लोकदृष्ट्यैव, न तु परमार्थतः । अनेनाकाङ्क्षाद्यभावेऽपि वाक्यत्वं न विरुद्ध्यत इत्युक्तं भवति । दश दाडिमानीत्यपि पदार्थनिरूपकत्वाद् वाक्यं प्रमाणम् । वह्निना सिञ्चतीत्यपि उष्णजलेन सिञ्चतीत्यर्थो भवति । यथा गङ्गायां घोषः । प्रतारकवाक्यमेवासत्यादियुक्तमपि बाधितार्थत्वादवाक्यम् । तस्मात् सर्वमेव वाक्यं प्रमाणम् । यतः सा सरस्वती सर्वतोमुखी ॥ १६९ ॥ उपासनार्थमाह ॥ पदद्वयमिति ॥ वागूरूपः पतिर्भगवान् । अधुना विकारवत्पदानामर्थद्वयं निरूपयितुं भगवति भेदानाह ॥ पदानीति ॥ सुबन्तावयवे तिङन्तत्वम् । विपरीतत्वं च क्वचित् ॥ १७० ॥ तदेवाह ॥ तत्रासकरवालादीति ॥ तत्रेति पृथगपि सम्भवति । करवालशब्दात् । -करशब्दः पृथगपि । करवामेति तिङन्ते सुबन्तपदद्वयम् । एवं सर्वत्रोह्यम् । तत्र पदभेदः शास्त्रार्थः । तादृशप्रयोग फलमाह ॥ तदुदाहरण इति ॥ १७१ ॥ वृत्तीनां भेद-

क्रमाह ॥ फलार्थमिति ॥ रूढिलक्षणा नास्मत्सम्मता । गौणी च वृत्तिर्न गुणयोगात् ॥ किन्तूपचारत एव । तादृशधर्मिरूपेण धर्मिण एवोपचारात् । धर्मस्फुरणं तु धर्मिज्ञानादेव । एवं त्रैविध्ये हेतुमाह ॥ माकल्येति ॥ १७२ ॥ एवं शब्दगतान् धर्मान् विचार्य तस्य प्रवर्त्तकत्वमस्ति, न वेति विचार्यते॥ प्रवर्त्तकत्वमित्यादिना ॥ भ्रमत्वादव्यतिरिक्तेषु शब्दश्रवणानन्तरभाविन्यां प्रवृत्तौ कारणता * शब्दस्यावसीयते । तत्र षट्पक्षाः सम्भवन्ति—स्वरूपम, अभिप्रायज्ञानं, भावना, अभिधा, आज्ञा, इष्टसाधनताज्ञानमिति । तान् सर्वानेकहेलया स्वमतेन दूषयति ॥ कृष्णस्यैव प्रवर्त्तकत्वं, न विध्यर्थस्येति ॥ काकतालीयतया पूर्वभावो न हेतुत्वसाधकः । अव्यभिचारस्तु विध्यादीनां नास्ति । ननु दृश्यते—ममेष्टं ममैतत्कार्यमित्यादिज्ञानं कृत्वा प्रवर्त्तनात् कारणत्वमित्याशङ्क्याह ॥ कार्यतादीति ॥ १७३ ॥ कुत एतदत आह ॥ अनिष्टमिति ॥ इष्टसाधनताज्ञानस्य प्रवर्त्तकत्वं तदा स्याद् यद्यनिष्टसाधनतां ज्ञात्वा निवर्त्तेत ॥ विषभक्षणे युद्धे भृगुपतने प्रवृत्तिदर्शनात् । तथा पाषण्डमतेऽसाध्येऽपि मोक्षे प्रवृत्तिदर्शनात् । अतो भगवानेव यथेष्टं यथैव प्रवर्त्तयते तथा ज्ञानमुत्पाद्य प्रवर्त्तते । वस्तुतस्तु न किञ्चिदिष्टं, न किञ्चित्साध्यमित्यर्थः ॥ १७४ ॥

एवं सतीति ॥ तुल्यत्वे प्रामाण्ये च सतीत्यर्थः ॥ तत्रेति ॥ वाक्यावयवेषु ॥ आहेति ॥ कल्पनायां बीजमाहेत्यर्थः । पदार्थनिर्माणमिति ॥ लौकिकवाक्यस्य तदर्थस्य च बुद्धिकल्पितत्वात् तदङ्गभूतपदार्थस्यापि नानानुपूर्वीकपदोच्चारणेन कल्पितत्वाऽवधारणात् तथैव वस्तुनिर्माणमित्यर्थः ॥ तावतैवेति ॥ योग्यावयवरूपतामात्रेणैवेत्यर्थः ॥ ते धर्मा इति ॥ आकाङ्क्षादय इत्यर्थः ॥ एषापि कल्पनैवेति ॥ वस्तुमात्रस्य भगवद्रूपत्वेन नित्यतया अन्यत्वाभावेन धर्माणामङ्गभावप्राप्तिरपि कल्पनैवेत्यर्थः । प्रसङ्गादाकाङ्क्षादीनां स्वरूपमुच्यते ।

तत्र व्याकरणपरिष्कृतप्रकृतिप्रत्ययसमभिव्याहारः पदे आकाङ्क्षा । न च विभक्तिविशेषसमभिव्याहारमात्रं सेति वाच्यम् । जल अम्, आनीङ् सिप्—इति वाक्यादपि जलमानयेति बोधापत्तेः । नापि यत्पदं यत्पदेन सह यादृशान्वयबोधजनकं तत्पदस्य तत्पदसमभिव्याहारस्तादृशान्वयबोधे सा । केवलयोः प्रकृतिप्रत्यययोः पदसंज्ञायामनुशासनविरहात् । अर्थवच्छब्दत्वमिति स्वीकृत्य दोषपरिहारेऽपि, घट टा, वारि अम, आनीङ् सिप्–इतिवाक्यादपि बोधापत्तेर्दुर्वारत्वात् । अनुशासनविरहेऽप्यर्थवत्तया पदतासद्भावात् । पदपारिष्कारायामनुशासनापेक्षायां । तदीयपदसंज्ञानुशासनत्यागस्यानुचितत्वात् । नापीच्छा । तस्याश्चेतनधर्मत्वेन शब्दे तस्या वक्तुमशक्यत्वात् । नापि श्रोतरि पदोच्चारणजसंसर्गावगमप्रागभावः सा । तस्यात्मनिष्ठत्वेन व्यधिकरणत्वात् । प्रागभावस्यैव विप्रतिपन्नत्वेन तद्रूपताया वक्तुमशक्यत्वाच्च । तस्माद् व्युत्पत्तिपक्षे पूर्वोक्तरूपैवाकाङ्क्षेति दिक् । इयं च पदधर्मः । योग्यता तु विवक्षितकार्यान्वयानुकूलत्वं बाधकाभावो वा । सा चार्थधर्मः । आसत्तिः, सन्निधिः, अव्यवधानेन स्वप्रतियोगिज्ञानं वा पदस्यैव धर्मः । यत्रापि निपुणतमराजभृत्यादीनां पदसन्निधिविरहेऽपि बोधो दृश्यते तत्र बोद्धा पदसन्निधिरस्त्येवेति न दोषः ॥ १६७ ॥ एतदेव स्पष्टयितुं दृष्टान्तं वदन्त आहुः ॥ मृदेत्यादि ॥ वाक्यस्य युक्तत्वायुक्तत्वमित्यर्थः ॥ मृदेत्यादि मूलं त्वेवं योज्यम् । मृदा घोटकनिर्माणे शृङ्गकरणे युक्तार्थबोधाय यथा न मतं तथा आकाङ्क्षारहितं पदमपि तादृशार्थबोधाय न मतमिति । तथाच बोधानुरोधेन आकाङ्क्षादीनामङ्गानां यत्र सद्भावस्तद्युक्तमिति कल्प्यते । यत्र च तदभावस्तदयुक्तमित्युच्यते इत्येषा बोधानुरोधिनी कल्पनेति निरुक्तमित्यर्थः । एतस्याः कल्पनायाः परम्परामासत्त्वायाहुः ॥ यथायथेत्यादि ॥ तस्या दृष्टानुरोधित्वमाहुः ॥ अन्यथेति ॥ घटः कर्मत्वमानयनं कृतिरित्यादिरूपेण वाक्यघटनेऽप्रतीतौ हेतुमाहुः ॥ नन्वित्यादि ॥ १६८ ॥ एवं वाक्यानां युक्तायुक्तत्वे समर्थयित्वा आकाङ्क्षादीनामङ्गतायाः कल्पितत्वं समर्थयन्त आहुः ॥ उपसंहरतीत्यादि ॥ तथाच वाक्यार्थोपस्थितौ पदजन्यपदार्थस्मृतेर्द्वारत्वात् पदैश्चाकाङ्क्षितयोग्यासन्नानामेव स्मारणादाकाङ्क्षादयोऽर्थधर्माः श्रोतृवक्तृभ्यां पदेषु कल्प्यन्त इति पदधर्मत्वव्यवहार

इत्यर्थः । तदाहुः ॥ लोकेत्यादि ॥ परमार्थतस्तु ब्रह्मरूपतया सर्वस्य
सर्वरूपत्वेन सर्वकारकनिर्वाहः सर्वैरिति तथेत्यर्थः । एवं परमार्थ-
सूचने यत् सिद्ध्यति तदाहुः ॥ अनेनेत्यादि ॥ कथमित्यत आहुः ॥
दशेत्यादि ॥ तथाच पदात् पदार्थप्रमावत् पदसमूहादर्थसमूहप्रमा
अपि बाधकाभावादुत्पद्यत इति तथेत्यर्थः । नन्वस्त्वनाकाङ्क्षितपद-
समूहस्य प्रामाण्यं, तथाप्ययोग्यवाक्यस्य व्यवहारबाधकत्वात् । प्रा-
माण्यं कथं सङ्गच्छत इत्यत आहु. ॥ वह्निनेत्यादि ॥ तथाचायोग्य-
वाक्यमपि सेचकमुखत्वप्रतीतिफलकलक्षणया बोधकं सम्भवतीति
न तस्यापि व्यवहारबाधकत्वमिति तदपि प्रमाणमित्यर्थः । आस-
त्तिरहितस्य बोधकत्वं तु चादिव्यवधानेन कालव्यवधानेन च गूढा-
र्थवक्तृषु तादृशसमययोद्धृषु च प्रमितिजनकत्वेन प्रसिद्धमेवेति
प्रामाण्यविचारे तादृशवाक्यमत्र नोदाहृतमिति ज्ञेयम् । नन्वेवम्
अयोग्यस्यापि प्रामाण्ये सति प्रतारकवाक्येऽपि प्रामाण्यापत्तिरित्या-
शङ्कायामाहुः ॥ प्रतारकेत्यादि ॥ लोके वाक्यार्थस्य बुद्धिकल्पितत्वेन
भ्रान्तस्य च यथार्थवादित्वेन तद्वाक्यं नाप्रमाणं, किन्तु तस्य ज्ञान-
मेवाप्रमाणम् । अत एव लोके तादृशोऽनृतवादी नोच्यते, किन्त्वज्ञ
एवोच्यते । अत एव ब्रह्मणा, नानृतं तव तच्चापि यथा मां प्रब्रवीषि
भोः * अविज्ञाय परं मत्त एतावत्त्वं यतो हि मे इत्यनेन नारदवा-
क्यस्य प्रमाणत्वं, नारदस्य चाज्ञत्वमुक्तम् । एतेन प्रमत्तवाक्यमपि
व्याख्यातम् । एतावानन्योऽपि विशेषः । यत्तादृशवाक्याद्वाक्यसत्य-
त्ववक्तृभ्रान्तत्वयोरेव प्रमा, न [illegible] वाक्यार्थस्येति । प्रतारकस्तु लोके
शास्त्रेऽपि मिथ्यावादित्वेन गर्हित इति तद्वाक्यं वाक्याभास एवे-
त्यर्थः । एवश्चाबाधितार्थबोधकपदसमूहत्वं प्रमाणवाक्यत्वमिति
लक्षणं ज्ञेयम् ॥ १६० ॥ ॥ उपासनार्थमिति ॥ एवं विचारितस्य नाम-
प्रपञ्चस्य भगवद्रूपत्वेनोपासनार्थमित्यर्थः । उपासनायां सुप्तिङ-
न्तयोः पदत्वकथनादन्येषां व्याकरणसिद्धानामङ्गत्वमुपासकैरुह्य-
मिति बोधितम् । वाचं धेनुमितिवत् ॥ अधुनेत्यादि ॥ एवं शुद्धप-
दानां स्वरूपे निरूपितेऽपि न नामलीलापूर्त्तिरिति विकारवत्पदानां
यथा मृदादीनां नाना आकृतयो रूपसृष्टौ विकारास्तथा नामसृष्टौ प-
दानां पदान्तरगर्भत्वमिति तद्वतां पदानाम् अर्थद्वयं वक्तुं भगव-
ति नामप्रपञ्चात्मके विकारानाहुरित्यर्थः । मूले ॥ बहुश इति ॥ बहूनां-

त्यर्थः ॥ सुप्तिङ्मध्यविभेदत इति ॥ सुप् सुबन्तं मध्ये यस्येति सुप्मध्यं च तिङ्मध्यं च सुप्तिङ्मध्यं, तत्कृतविभेदादित्यर्थः । एवञ्च सुबन्तेऽपि तिङन्तपदद्वयं कुरु भवेत्यादावूह्यमित्याशयेनाहुः ॥ एवमित्यादि ॥ एतत्कथनप्रयोजनमाहुः ॥ तत्र पदभेदः शास्त्रार्थ इति ॥ तथा च शास्त्रार्थत्वात् कथनमित्यर्थः । मूले ॥ ते भिन्ना अंशतः परे इति ॥ अंशतो भिन्नास्ते शब्दाः परे, विकृतत्वादखण्डपदेभ्योऽतिरिक्ता इत्यर्थः । अग्रिमे मूले ॥ तत्र योगादिकल्पनेति ॥ श्लेषस्य नानार्थाश्रयत्वादेकपदे कथनमशक्या तात्पर्यता सर्वत्र न निर्वहतीति तदर्थं श्लेषे योगस्य योगरूढेर्वृत्त्यन्तरस्य च कल्पनेत्यर्थः । अग्न्यादिपदेन तात्पर्यवृत्तेरपि संग्रहः । मा मा वैदर्भ्यंऽलुयेथा * इत्यस्य सुयोर्विभ्यां शब्दस्य मुख्या गौणी तात्पर्यवृत्तिश्चेति भेदेन त्रेधा वृत्त्यङ्गीकारात् । न च लक्षणया चतुर्थी स्यात् । लक्षणागौण्योरत्यभेद इति तत्रार्कः । मुख्यार्थबाधस्योभयत्रापि तौल्यात् । तेन शक्यसम्बन्धो गौण्या एव लक्षणम् ॥ १७० ॥ १७१ ॥ ॥ फलार्थेत्यादि ॥ तथा च गौणी फलार्थम् आद्रियमाणा लक्षणा प्रोक्ता । चोऽवधारणे । उपचारतः सैव गौणी प्रोक्तेति गौण्या एव फलमुपचारश्चेति भेदकद्वयमित्यर्थः । तात्पर्यं च शक्यातिरिक्तत्वे सति बुभुत्सितार्थप्रतीतिजनकत्वमेव, न तु तत्प्रतीतीच्छया उच्चारितत्वम् । तेन व्यञ्जनाया अपि संग्रहः । वस्तुतस्तु मुख्या तात्पर्यं चेति द्वे एव वृत्ती इति सिद्धान्तः । तात्पर्ये वा अन्तर्भाव इति लक्षणागौण्योरभेदपक्षोऽसर्द तत्रैवोक्तेः । विशेषः प्रस्थानरत्नाकरादवगन्तव्यः । ननु रूढिलक्षणाया अपि सद्भावात् वृत्तीनां भेदः साहजिक एवाङ्गीकार्यो, न तु भेदकफल इत्याशङ्कायामाहुः ॥ रूढीत्यादि ॥ कुशलादिपदे कोशेन शक्तेरेव ग्राहणात् पदानां चाकृतौ प्रवाहे वा शक्तत्वेन चित्रतुरगादौ च तदाकृतेः सत्त्वेन सारूप्यनिबन्धनया गौण्या व्यस्तघटादावपि सूक्ष्मरूपेण धर्मिसद्भावाच्छक्त्यैव निर्वाहात् तथेत्यर्थः । गौण्यामपि कञ्चिद्विशेषमाहुः ॥ गौणीत्यादि ॥ तत्सिद्धिजातिसारूप्यप्रशंसालिङ्गभूमभिः * षड्भिः सर्वत्र शब्दानां गौणीवृत्तिः प्रकल्पितेति पूर्वतन्त्रोक्ता गौणी वृत्तिर्न गुणयोगात् तत्सिद्ध्यादिगुणयोगात्, किन्तु विधेयस्तुत्यर्थोपचारत एव । तत्र हेतुः ॥ तादृशेत्यादि ॥ तादृशो, यजमानः प्रस्तर इत्यादौ यजमानादिरूपो यो धर्मी तद्रूपेण धर्मिणः

इत्यर्थः । तदाहुः ॥ लोकेत्यादि ॥ परमार्थतस्तु ब्रह्मरूपतया सर्वस्य सर्वरूपत्वेन सर्वकारकनिर्वाहः सर्वैरिति तथेत्यर्थः । एवं परमार्थसूचने यत् सिद्ध्यति तदाहुः ॥ अनेनेत्यादि ॥ कथमित्यत आहुः ॥ दृशेत्यादि ॥ तथाच पदात् पदार्थप्रमावत् पदसमूहादर्थसमूहप्रमा अपि बाधकाभावादुत्पद्यत इति तथेत्यर्थः । नन्वस्त्वनाकाङ्क्षितपदसमूहस्य प्रामाण्यं, तथाप्ययोग्यवाक्यस्य व्यवहारबाधकत्वात् । प्रामाण्यं कथं सङ्गच्छत इत्यत आहुः ॥ वह्निनेत्यादि ॥ तथाचायोग्यवाक्यमपि सेचकमूर्सत्वप्रतीतिफलकलक्षणया बोधकं सम्भवतीति न तस्यापि व्यवहारबाधकत्वमिति तदपि प्रमाणमित्यर्थः । आसत्तिरहितस्य बोधकत्वं तु वादिव्यवधानेन कालव्यवधानेन च गूढार्थवक्तृषु तादृशसमययोद्धृषु च प्रमितिजनकत्वेन प्रसिद्धमेवेति प्रामाण्यविचारे तादृशवाक्यमत्र नोदाहृतमिति ज्ञेयम् । नन्वेवम् अयोग्यस्यापि प्रामाण्ये सति प्रतारकवाक्येऽपि प्रामाण्यापत्तिरित्याशङ्कायामाहुः ॥ प्रतारकेत्यादि ॥ लोके वाक्यार्थस्य युक्तिकल्पितत्वेन भ्रान्तस्य च यथादृष्टार्थवादित्वेन तद्वाक्यं नाप्रमाणं, किन्तु तस्य ज्ञानमेवाप्रमाणम् । अत एव लोके तादृशोऽनृतवादी नोच्यते, किन्त्वज्ञ एवोच्यते । अत एव ब्रह्मणा, नानृतं तव तच्चापि यथा मां प्रब्रवीषि भोः * अविज्ञाय परं मत्त एतावत्त्वं यतो हि मे इत्यनेन नारदवाक्यस्य प्रमाणत्वं, नारदस्य चाज्ञत्वमुक्तम् । एतेन प्रमत्तवाक्यमपि व्याख्यातम् । एतावानन्योऽपि विशेषः । यत्तादृशवाक्याद्वाक्यसत्यत्वक्तृभ्रान्तत्वयोरेव प्रमा, न तु वाक्यार्थस्येति । प्रतारकस्तु लोके शास्त्रेऽपि मिथ्यावादित्वेन गर्हित इति तद्वाक्यं वाक्याभास एवेत्यर्थः । एवञ्चाबाधितार्थबोधकपदसमूहत्वं प्रमाणवाक्यत्वमिति लक्षणं ज्ञेयम् ॥ १६९ ॥ ॥ उपासनार्थमिति ॥ एवं विचारितस्य नामप्रपञ्चस्य भगवद्रूपत्वेनोपासनार्थमित्यर्थः । उपासनार्थां सुप्तिङन्तयोः पदत्वकथनादन्येषां व्याकरणसिद्धानामङ्गत्वमुपासकैरूह्यमिति बोधितम् । वाचं धेनुमितिवत् ॥ अधुनेत्यादि ॥ एवं शुद्धपदानां स्वरूपे निरूपितेऽपि न नामलीलापूर्त्तिरिति विकारवत्पदानां यथा मृदादीनां नाना आकृतयो रूपसृष्टौ विकारास्तथा नामसृष्टौ पदानां पदान्तरगर्भत्वमिति तद्वतां पदानाम् अर्थद्वयं वक्तुं भगवति नामप्रपञ्चात्मके विकारानाहुरित्यर्थः । मूले ॥ बहुश इति ॥ बहूना-

श्रीहरिः ।

# विद्यावैजयन्ती

—०※०—

वेदशास्त्रधर्मसंरक्षणार्थ दैवोद्धारार्थ आविर्भूत श्रीश्रीवल्लभाऽऽचार्य श्रीमहाप्रभुतनूज श्रीपूर्णपुरुषोत्तमस्वरूप श्रीश्रीविट्ठलनाथदीक्षिताऽऽत्मज महाराज गोस्वामि श्रीश्रीयदुनाथजीवंशावतंस श्रीश्रीमुकुन्दराय श्रीगोपाललालप्रभुसेवाप्रवीण अंक ६ घरके टीकेत गोस्वामि श्रीगिरिधरजीमहाराजके उदाराश्रयमें यह विद्यावैजयन्ती नाम पुस्तकावली क्रमशः प्रकाशित होय है । एकसंख्याको मूल्य १) एक रुपिया है । विद्यासंरक्षण ये मुख्य उद्देश्य याको है । तासूँ जिनकी ये पुस्तकसङ्ग्रहकेलिये इच्छा होय सो आगे लिखे पतेसूँ मँगाय लेयँ ।

| | |
|---|---|
| विद्यावैजयन्ती संख्या ( ५ ) | ५) |
| श्रीवल्लभाचार्यस्तुतिरत्नावली । | १) |
| श्रीमद्भगवद्गीताटीका अमृततरङ्गिणी । | २) |
| श्रीविद्वन्मण्डनम् । | १) |
| ब्रह्मसूत्रवृत्तिः । मरीचिका | २) |
| शुद्धाद्वैतमार्तण्डः, प्रमेयरत्नार्णवश्च । | १) |
| अणुभाष्यम् । प्रकाशसहितम् । ( संख्या १९ ) | १५) |
| तत्त्वार्थदीपः । आवरणभङ्गसहितः । शास्त्रार्थप्रकरणम् । | २) |
| ब्रह्मसूत्रवृत्तिः । भाष्यप्रकाशिका । प्रथमाध्यायः । | १) |

## व्रजभाषा

| | |
|---|---|
| अष्टाक्षरटीका तथा सर्वोत्तमटीका | \|=) |
| श्रीवल्लभाष्टकटीका तथा चतुःश्लोकीटीका | 1) |

ठि०

१ श्रीगोपालमन्दिर व्रजगोपालभट्ट काशी

२ हरिदासगुप्त चौखम्बासंस्कृत सिरीज बनारस

प्रत्तरादेरेवोपचारात् तेन रूपेण धर्मस्यैवोपचर्यते, न तु धर्म इति त-थेत्यर्थः । ननु जैमिनीये तत्सिद्धयादि सूत्रितमिति तदनङ्गीकारे तस्य का गतिरित्यत आहुः ॥ धर्मेत्यादि ॥ वाक्यश्रवणोत्तरं प्रथमतो ध-र्म्यैव ज्ञायत इति पश्चाद्धर्मस्फुरणार्थं तथा सूत्रितमतो न तद्विरोध इत्यर्थः । एवमत्र शक्तिस्तात्पर्यं गौणी चेति तिस्रो वृत्तयः स्वीकृ-ताःतद्भेदास्तु शास्त्रान्तरे प्रसिद्धा इति नात्र प्रपञ्चिताः,प्रस्थानरत्ना-करे केचनोक्ताश्चेति ततो ज्ञेयाः ॥ हेतुमिति ॥ प्रयोजकम् ॥प्राकट्ये-त्यादि ॥ तथाच लीलार्थमेवं भेद इति लीलैव प्रयोजिकेत्यर्थः ॥ ॥ १७२ ॥ ॥ विचार्यत इति ॥ वेदाख्यस्य प्रमेयस्य बलज्ञानार्थं वि-चार्यत इत्यर्थः।प्रवर्त्तकत्वमित्यत्र षट्पक्षेषु, स्वरूपमिति =प्रवृत्तिपर-वाक्यस्वरूपम् ॥ अभिप्रायज्ञानमिति ॥ लौकिकवाक्ये वक्तुस्तात्प-र्यज्ञानम् । वेदे पुरुषानङ्गीकाराच्छब्दनिष्ठाऽभिप्रायज्ञानम् ॥ भावने-ति ॥ आत्मत्वनिष्ठा आर्थी भावना ॥ अभिधेति ॥ लिङ्निष्ठा शाब्दी भावना भाट्टमते ॥ आज्ञेति ॥ नियोगः प्राभाकरमते । इष्टसाधनता नैयायिकमते । अत्र बलवदनिष्टाननुबन्धित्वमपि विशेषयन्ति । एवं कार्येणापि वैयाकरणमतसिद्धा ज्ञेया ॥ ननु दृश्यत इत्यादि ॥ तथाच षट्सु पक्षेषु पञ्चानामर्थानां पराहतिसम्भवेऽपि सर्वजनीनानुभवसा-हाय्येन षष्ठस्य प्रवर्त्तकत्वमस्त्वित्यर्थः । एतदुत्तरं तु मूल एवोक्तम् । साध्यमसाध्यं वा नेति मूलयोजना ॥ १७३ ॥ ॥ सिद्धान्तितमर्थं द्रढयितुं विपक्षे बाधकं तर्कमाहुः ॥ इष्टसाधनतेत्यादि ॥ ननु तत्रेष्ट-साधनत्वज्ञानसाध्यत्वभ्रमादेव प्रवृत्तिरितिचेत् । सत्यम् । तथापि स भ्रमः केषाञ्चिदुदेति, केषाञ्चिन्नेत्यत्र किं कारणमिति पृच्छामः । चाद् इतिचेन्न सर्वान् प्रति तुल्यत्वात् । अदृष्टं चेन्न ईश्वरेच्छयैव निर्वाहात् । यथेदं तथा श्रुतिगीतौ, अपरिमिता ध्रुवा * इत्यत्रान्यत्र च प्रपञ्चितमिति ततोऽवधेयम् ॥ १७४ ॥

मिथ्या प्रलोभनं वेदे न क्वचित् कर्हिचिद् भवेत् ॥
तथैव कर्मविज्ञानं धर्मस्तेनैव नान्यथा ॥
साधनानि स्वरूपं च सर्वस्याह श्रुतिः फलम्॥१७५॥

श्रीहरिः ।

# विद्यावैजयन्ती

—०*०—

वेदशास्त्रधर्मसंरक्षणार्थं दैवोद्धारार्थं आविर्भूत श्रीश्रीवल्लभाऽऽचार्य श्रीमद्प्रभुतनूज श्रीपूर्णपुरुषोत्तमस्वरूप श्रीश्रीविट्ठलनाथदीक्षिताऽऽत्मज महाराज गोस्वामि श्रीश्रीयदुनाथजीवंशावतंस श्रीश्रीमुकुन्दराय श्रीगोपाललालप्रभुसेवाप्रवीण छठे ६ घरके टीकेत गोस्वामि श्रीगिरिधरजीमहाराजके उदाराश्रयमें यह विद्यावैजयन्ती नाम पुस्तकावली क्रमशः प्रकाशित होय है । एकसंख्याको मूल्य १) एक रुपिया है । विद्यासंरक्षण ये मुख्य उद्देश्य याको है । तासूँ जिनकी ये पुस्तकसङ्ग्रहकेलिये इच्छा होय सो आगे लिखे पतेसूँ मँगाय लेवें ।

| | |
|---|---|
| विद्यावैजयन्ती संख्या ( ४ ) | ४) |
| श्रीवल्लभाचार्यस्तुतिरत्नावली । | १) |
| श्रीमद्भगवद्गीताटीका अमृततरङ्गिणी । | २) |
| श्रीविद्वन्मण्डनम् । | १) |
| ब्रह्मसूत्रवृत्तिः । मरीचिका | २) |
| शुद्धाद्वैतमार्तण्डः, प्रमेयरत्नार्णवश्च । | १) |
| अणुभाष्यम् । प्रकाशसहितम् । ( संख्या १५ ) | १५) |
| तत्त्वार्थदीपः । आवरणभङ्गसहितः । शास्त्रार्थप्रकरणम् । | २) |
| ब्रह्मसूत्रवृत्तिः । भाष्यप्रकाशिका । प्रथमाध्यायः । | १) |

## व्रजभाषा

| | |
|---|---|
| अष्टाक्षरटीका तथा सर्वोत्तमटीका | ।≈) |
| श्रीवल्लभाष्टकटीका तथा चतुःश्लोकीटीका | ।) |

ठि०

१ श्रीगोपालमन्दिर रत्नगोपालभट्ट काशी

२ हरिदासगुप्त चौखम्बासंस्कृत सिरीज बनारस

॥ श्रीहरि ॥

# विश्वासमञ्जरी ।

नाम

## ग्रन्थरत्नावली

---

श्रीवल्लभाचार्यकुलकमलदिवाकर श्रीश्रीमुकुन्दराय
श्रीगोपाललालप्रभुसेवाप्रवीण श्रीमत्प्रभुचरण-
गोस्वामिश्रीविट्ठलनाथदीक्षितात्मज महाराज
गोस्वामि श्रीयदुनाथजीके घरके ६ छठी
गादीके टीकेत काशीस्थ गोस्वामि-
श्रीगिरिधरजीमहाराजके श्री-
चरणाश्रयमों रत्नगोपाल-
भट्ट प्रकाशित ।

---

( संख्या ५ ) न्योछावर १)

संवत् १९६५

---

विद्याविलास प्रेस बनारस ।

## श्रीमुकुन्दरायो जयति ।

## श्रीगोपाललालो जयति ।

शेषः शास्त्रेऽथ काव्ये कविकुलतिलकाऽऽराध्यपादाम्बुजश्री-
र्न्याये न्यायार्थवर्यो विमलतरमतिः सांख्यसंख्यावदार्यः ॥
वेदे वेदान्तशास्त्रे हरिरतिनिपुणः कर्मशास्त्रे गुरुर्यो
योगे योगीन्द्रवन्द्यो निजजननिवहोद्धारकृत् कृष्णचन्द्रः ॥ १ ॥
काश्मीरो गुणकुङ्कुमे हिमकरः सन्तापनिर्वापणे
धर्माम्भोजवने नवाम्बरमणिर्दीपो ह्यपत्कानने ॥
सिन्धुः कीर्तिकलानिधौ निरुपधिर्बन्धुः सपक्षे जने
श्रीमान् भाति विभुर्गुरुर्गिरिधरस्तत्पादपद्मे नुमः ॥ २ ॥

## विद्यावैजयन्ती

—०*०—

वेदशास्त्रधर्मसंरक्षणार्थं दैवोद्धारार्थं आविर्भूत श्रीश्रीवल्लभाऽऽचार्य श्रीमहाप्रभुतनूज श्रीपूर्णपुरुषोत्तमस्वरूप श्रीश्रीविठ्ठलनाथदीक्षिताऽऽत्मज महाराज गोस्वामि श्रीश्रीयदुनाथजीवंशावतंस श्रीश्रीमुकुन्दराय श्रीगोपाललालप्रभुसेवाप्रदीप छठे ६ घरके टीकेत गोस्वामि श्रीगिरिधरजीमहाराजके उदाराश्रयमें श्रीश्रीमहाराजने स्वकीय निजसेवक भट्ट श्रीरामकृष्णशास्त्रीकूं वितीर्ण शुद्धाद्वैतब्रह्मविद्यामन्दिरनामपुस्तकालयकी आज्ञासूं यह विद्यावैजयन्ती नाम पुस्तकावली क्रमशः प्रकाशित होय है । विद्यासंरक्षण ये मुख्य उद्देश्य याको है । तासूं जिनकी ये पुस्तकसङ्ग्रहकेलिये इच्छा होय सो आगे लिखे पतेसूं मँगाय लेवें ।

| | |
|---|---|
| १ विद्यावैजयन्ती सख्या ( ५ ) | ५) |
| प्रति संख्या | १) |
| २ ब्रह्मसूत्रवृत्तिः । भावप्रकाशिका । प्रथमाध्यायः । | १) |

### ब्रजभाषा

| | |
|---|---|
| अष्टाक्षरटीका तथा सर्वोत्तमटीका । | ।≈) |
| श्रीवल्लभाष्टकटीका तथा चतुःश्लोकीटीका । | ।) |

१ श्रीमुकुन्दरायजी की पेटी, श्रीजीवनजीमहाराजकी चालीमें भूलेश्वरचकला मुम्बई ।

२ श्रीगोपालमन्दिर व्रजगोपालभट्ट काशी

न प्रवर्त्तयितुं शक्तास्तथाचेन्नरको न हि ॥
लोकेऽपि राजदण्डादेरन्यथा विषयो न हि ॥ १७६ ॥
प्रेरको भगवानात्मा स्वात्मना दोषवर्जितः ॥
न विशेषोऽस्ति लोकेऽस्मिँस्तारतम्यं न चैव हि ॥ १७७ ॥
अखण्डं कृष्णवत् सर्वं यथा तत्तु निरूपितम् ॥
आत्मैव तदिदं सर्वं सृज्यते सृजति प्रभुः ॥ १७८ ॥
त्रायते त्राति विश्वात्मा ह्रियते हरतीश्वरः ॥
आत्मैव तदिदं सर्वं ब्रह्मैव तदिदं तथा ॥ १७९ ॥
इति श्रुत्यर्थमादाय साध्यं सर्वैर्यथामति ॥
अयमेव ब्रह्मवादः शिष्टं मोहाय कल्पितम् ॥ १८० ॥

नन्वेवं सत्यर्थवादादीनां वैयर्थ्यमित्याशङ्क्याह ॥ मिथ्याप्रलोभनादिति ॥ वेदे कर्मादिष्वविद्यमानं फलरूपं न कोऽप्यङ्गीकरोति । तेन सार्थकता स्यात् । किन्तु यथास्थितमेवाह ॥ अतः सर्वस्यापि स्वरूपप्रतिपादकत्वान्नैकवाक्यतासिद्ध्यर्थमपि प्रवर्त्तकत्वमङ्गीकर्त्तव्यम् । तर्हि अवचनमेवास्त्वित्याशङ्क्याह ॥ तथैव कर्मविज्ञानमिति ॥ क्षिप्रकारिणीं देवतां ज्ञात्वैव कर्म कर्त्तव्यम् । स्तुतिरुत्कर्षाधायकगुणवर्णनम् । तत्कर्माङ्गमेव प्रकरणात् । वषट्कारो वै गायत्र्यै शिरोऽच्छिनत् । तस्यै रसः परापतत् । स पृथिवीं माविशत् । स खदिरोऽभवदिति खदिरस्वरूपं तादृशमेव ज्ञात्वा कर्म कर्त्तव्यम् । एवं सर्वत्र । अतो वेदे सर्वस्यापि स्वरूपप्रतिपादकत्वान्न प्रवर्त्तकत्वं, किन्तु सर्वस्यापि साधनं फलं चाह । तावत्तत्र प्रवर्त्तकत्वं यदि तदोमिति ब्रूमः । फलमुखगत्यापि चेदेव सर्वानेव प्र-

प्रवर्त्तयेत् । ततश्च नरकादिकं न भवेत् । अतो दृष्टादृष्टारिष्टदर्शनाश्च वेदः प्रवर्त्तकः ॥ १७५ ॥ १७६ ॥ ॥ ननु भगवत्प्रवर्त्तनापक्षेऽपि अयं दोषः स्यात्, परमकृपालुत्वाद् भगवतस्तत्राऽऽह ॥ प्रेरको भगवानात्मेति ॥ सर्वेषामात्मत्वाद् यथासुखं प्रेरयतु, न कोऽपि दोषः । अधिकं तु भेदनिर्देशादित्यत्र विस्तृतमस्माभिः । तर्हि भगवान् स्वात्मानमपि कथमेवं प्रेरयति, समतयापि प्रेरणसमर्थस्तत्राह ॥ न विशेषोऽस्ति लोकेऽस्मिन्निति ॥ सर्वासु योनिषु सर्वेषु जीवेषु सुखदुःखयोस्तुल्यता । पुरुषः स्वभ्रमादेव तारतम्यं पश्यति । अन्यथा तत्सुखेच्छा कदाचिज्जायमाना न स्यात् । राज्यान्ते नरकं ध्रुवमिति वाक्यानि सङ्गतानि भवन्ति । तस्मात् फलं सर्वत्र समम् ॥ १७७ ॥ स्वरूपं च सममिति पूर्वमेवोक्तमित्याह ॥ अखण्डं कृष्णवत् सर्वमिति ॥ आविर्भावतिरोभावाविस्यत्र प्रमाणमाह ॥ आत्मैव तदिदमिति ॥ १७८ ॥ १७९ ॥ पूर्वं पुराणवाक्यानि श्रुतिवाक्यान्यप्युदाहृत्य सञ्जीवान् मत्वाह ॥ इति श्रुत्यर्थमादायेति ॥ एकं शास्त्रं देवकीपुत्रगीतमिति पूर्वं प्रतिज्ञातत्वात् तच्छास्त्रं ब्रह्मवादः ॥ शिष्टानि मतानि मोहार्थमुत्पन्नानीत्यवोचाम ॥ १८० ॥

वैयर्थ्यमिति ॥ इच्छाभावे प्ररोचनानुपयोगात् तथेत्यर्थः ॥ प्रवृत्तमिति ॥ प्रलोभन प्रवृत्तमित्यर्थः ॥ तर्हीति ॥ यदि लैकवाक्यतार्थमपि प्ररोचनमभिप्रेयते तर्हीत्यर्थः । कर्मविज्ञानप्रकारं दिङ्मात्रेण दर्शयन्ति ॥ क्षिपत्यादि, प्रयेरेत्यन्तेन ॥ तदिति ॥ ज्ञानम् । एतेन, विधिना त्वेकवाक्यत्वादिति जैमिनीयविरोधः परिहृतो बोध्यः । कर्माङ्गज्ञानविषयप्रतिपादकत्वेनैकवाक्यत्वस्य सूपपादत्वादिति । तथाचायमर्थः । विधिवाक्यादिश्रवणात्तर यत्र प्रवृत्तिस्तत्र विध्याद्यर्थबोधनद्वारेण भगवानेव प्रवर्त्तको, न तु विध्यर्थः प्रवर्त्तकः । अर्थवादोक्तस्तुत्यादिक च कर्मतत्त्वन्निवत्तच्छिरुद्धान्यनमस्वरूपं प्रतिपादयत् तद्बोधकतयाङ्गभाव भजते, न तु प्ररोचनयेति ॥ १७५ ॥ १७६ ॥ एवं वेद-

इय प्रमेयबलं विचार्य निर्णयं वक्तुं किञ्चिदाशङ्कन्ते ॥ नान्वित्यादि ॥ अयमिति ॥ नरकाग्निशमनरूपः ॥ मूले, स्वात्मना प्रेरक इति संबन्धः ॥१७७॥ पूर्वमेवोक्तमिति ॥ शास्त्रार्थप्रकरणे, यत्र येन यतो यस्येति वाक्योपन्यासेन तद्व्याख्यानेन च प्रमेयोक्तमित्यर्थः । प्रथमश्, न विरोधोऽस्ति लोकेऽस्मिन्नित्यादिकारिकाद्वयेन यथायथं प्रमेयप्रमाणाभ्यां सर्वं भगवानिति निर्णीतम् । आत्मैव तदिदमिति वाक्यं त्वेकादशस्कन्धेऽष्टाविंशाध्याये भगवतोक्तं ज्ञेयम् ॥ १७८ ॥ १७९ ॥

अतः परं वादिनां बहुत्वात् भाविभिस्तैः किञ्चिदन्यथा भाषा कृता युक्तयश्चेत् पराभूयन्ते तदा एतन्मार्गीयं स्वमतस्थापनं कथं कार्यमित्यपेक्षायां स्थापनप्रकारमुपदिशन्त आज्ञापयन्ति ॥ एवं पुराणेत्यादि ॥ ननु पूर्वप्रकरणे, वेदाः श्रीकृष्णवाक्यानीत्युक्त्वा, उत्तरं पूर्वसंदेहवारकमिति प्रतिज्ञातम् । प्रकृते तु श्रीभागवतवाक्येन निर्णीते, न गीतयेति प्रतिज्ञाविरोध इत्याकाङ्क्षायाम्, अयमेव प्रश्नवाद इति मूले विवृण्वन्ति ॥ पक्षं शास्त्रमित्यादि ॥ प्रश्नवादस्तु तत्र विभूतिविश्वरूपाध्याययोः स्फुरति । तथा चायमपि गीतोक्तनिर्णय इति न प्रतिज्ञाविरोध इत्यर्थः ॥ १८० ॥ इति प्रमेयप्रकरणम् ॥

एवमत्र प्रमेयप्रकरणे स्वतन्त्रप्रमेयनिरूपणेन, प्रश्नतनुः परं इत्यादिपादोनश्लोकद्वयोक्तं विचारितम् । अतः परं भजनं सर्वरूपेषु फलसिद्धा इत्यादिनोक्तं पुराणावान्तरप्रमेयभूतसाधनफलतारतम्यं विचारणीयम् । किञ्चोपोद्घातप्रकरणे कर्ममार्गविचारो जघन्याधिकारकत्वात् पूर्वं न कृत इति मोक्षसाधनीभूतस्मृतिविचारोऽपि फलतो न कृत इति सोऽपि करणीय इति तद्वक्तुं फलप्रकरणमारभन्ते ॥

एवं प्रमेयप्रकरणं समाप्य फलं निरूपयितुं न विहितसाधनमात्रेणैव फलं, किन्तु सर्वाङ्गसहितेनेति वक्तुं बहिरङ्गाणि निरूपयति ॥

वर्णाश्रमवतां धर्मः श्रुत्यादिषु यथोदितः ॥
तथैव विधिवत् कार्यः स्वकृत्यज्ञेन जीवता ॥
आचारो वृत्तिहीनश्चेदर्द्धं फलति नाखिलम् ॥ १८१ ॥
अनभ्यासेन वेदानामाचारस्य च लङ्घनात् ॥

आलस्यादन्नदोषाच्च मृत्युर्विप्राञ्जिघांसति ॥ १८२ ॥
शिलोञ्छवृत्त्या संतुष्टः श्रौतं कर्माखिलं चरेत् ॥
तपःस्वाध्यायनिरतो ह्यग्निहोत्रादिपञ्चकम् ॥ १८३ ॥
स्मार्तं कृताकृतं तस्य सर्वं जानन् हरिं यथा ॥
क्रमेण मुक्तिमाप्नोति ब्रह्मलोकं परं गतः ॥ १८४ ॥
एतस्य तारतम्येन मानुषानन्दतो द्विजः ॥
अक्षरानन्दपर्यन्तमानन्दान् विन्दते क्रमात् ॥ १८५ ॥
उपान्त्यानन्दपर्यन्तं पुनर्जन्म भवेद् ध्रुवम् ॥
तत्तद्रूपेण लोकेषु भोगान् भुक्त्वा तथाविधान् ॥ १८६ ॥

वर्णाश्रमवतामिति ॥ उक्तेनैव प्रकारेण कर्त्तव्यम् । न स्वऽनुकल्पैः । तथा सति प्रत्यवायपरिहार एव भवति, न तु फलमिस्पर्धः ॥ तथा स्ववृत्त्यन्नेनैव जीवता सर्वं साध्यम् । ननु तावन्मात्र एव वैगुण्यमस्तु, किं सर्वनाशेनेत्यत आह । आचार इति ॥ १८१ ॥ वस्तुतस्तु न फलतीत्याह ॥ अनभ्यासनेति ॥ १८२ ॥ तर्हि कथं फलतीत्याकाङ्क्षायामाह ॥ शिलोञ्छवृत्त्येति ॥ असन्तोषे तदपि व्यर्थम् ॥ १८३ ॥ तस्य बहु कर्त्तव्यं चेत् तदा अशक्यं भविष्यतीति स्मार्तं कृताकृतमित्याह ॥ स्मार्तमिति ॥ एतादृशस्य फलं ब्रह्मलोकं गत्वा ब्रह्मणा सह मुक्तिः । श्रौतस्योत्तमनिष्ठायामेतत्फलम् ॥ १८४ ॥ तारतम्ये फलाभावमाशङ्क्याह ॥ एतस्येति ॥ श्रोत्रियत्वप्रकामहतत्वं च तारतम्येन जायमानं तत्तत्फलसाधकम् । ब्रह्मानन्दाऽक्षरानन्दः । चतुर्मुखपक्षे ततोऽग्रे गणनाभावात् । एकस्यैव वर्षे वर्षे यद्याधिक्यं चेत् क्रमेणैव सर्वमाप्नोति ॥ १८५ ॥

प्रत्येकपक्षे फलगतं दोषमप्याह ॥ उपान्त्यानन्दपर्यन्तमिति ॥ प्रकारमाह ॥ तत्तद्रूपेणेति ॥ १८६ ॥

एवं प्रमेयेत्यादि ॥ एवं प्रमेयविचारे सर्वस्य भगवदभिन्नत्वेऽपि, यद्दु इयं प्रजायेयेतीच्छया आधिदैविकादिभावात्तेन प्रकारेण तारतम्यबोधनपूर्वकं प्रमेयप्रकरणं समाप्य फलं निरूपयितुं प्रमाणप्रकरणोक्तप्रमाणानुरोधिप्रमेयमध्ये पूर्वकाण्डोक्तप्रमेयस्य धर्मस्य पूर्वतन्त्रे निर्णीतत्वेऽपि अन्यथाव्याख्यातृभिस्तन्निर्णयस्य भ्रष्टत्वेन तदुद्धारस्य प्रतिज्ञातत्वात्, न विहितसाधनेत्यादिसंक्षेपरीत्या निर्णयोद्धारं च वक्तुं बहिरङ्गानि स्मृतिपुराणोक्तानि तत्साधनानि निरूपयतीत्यर्थः ॥ मूले, वर्णाश्रमवतामिति ॥ तत्र वर्णा नाम, मुखतोऽसृजत ब्रह्म पुरुषस्य कुरूद्वह * इत्यादिषु भगवतो मुखबाहूरुपादेभ्यो जातत्वेन उक्ता ब्राह्मणक्षत्रियविट्शूद्राः । ते च देवताविशेषा उपनयनादिना वेदं समापयन्ति, निषिद्धाचरणादिना च्यावयन्तीति द्वितीयस्कन्धोक्तिभ्यां, ब्रह्माननं क्षत्रभुजो महात्मा * इत्यत्र स्थितम् । तन्मध्ये ब्राह्मणत्वादिजातिवादे प्रपञ्चितम् । आश्रमा अपि, गृहाश्रमो जघनतः * इत्यादिषु जघनहृदयवक्षःस्थलशीर्षभ्य उत्पन्ना गार्हस्थ्यब्रह्मचर्यवनवाससंन्यासाख्या देवताविशेषा एवेति समानन्यायादवसीयते । तत्र वर्णज्ञानमाचारेण । यस्य यल्लक्षणं प्रोक्तं पुंसो वर्णाभिव्यञ्जकम् ... इति भगवद्वाक्यात् । भारते आजगरेऽपि तथा प्रतिपादनाच्च । अन्यत्र तु स्वभावजं कर्म । शमो दमस्तपः शौचमित्यादिभिरेकादशे गीतायां चोक्तम् । एवमाश्रमज्ञानमप्याचारादेव । गृहस्थस्य क्रियात्यागो व्रतत्यागो वटोरपि * तपस्विनो ग्रामवासो भिक्षोरिन्द्रियलोलता * आश्रमापसदा ह्येते खल्वाश्रमविडम्बकाः * इति सप्तमस्कन्धवाक्ये विडम्बकत्वकथनेनाऽऽचारादेव तज्ज्ञानसिद्धेः । तदुक्तं धर्मस्तु—इज्याध्ययनदानप्रतिग्रहाध्यापनयाजनानीति षड् ब्राह्मणस्य । इज्यादित्रयं क्षत्रियविशोः । शूद्रस्य द्विजादिशुश्रूषेति । सोऽयं श्रुतिस्मृतिपुराणेषु यथोदितो मुख्ये कल्पे येन प्रकारेणोक्तस्तथैव कार्य इत्यर्थः । तदेतद् व्याकुर्वन्ति ॥ उक्तेनेत्यादि ॥ कर्तव्यमिति पाठे, धर्मास्त्यं कर्मेति शेषो बोध्यः । नन्वनुकल्पानामपि तत्रत्रोक्तत्वान्मुख्यकल्पे किमित्याग्रहः क्रियत इत्यत आहुः ॥ तथा कृता-

त्यादि ॥ अन्यथा मुख्यफलनिरूपणं वृथैव स्यादिति भावः । ननु देश-कालबलाद्यपेक्षयाऽनुकल्पानां विधानात्तदनुसारेण करणेऽपि मुख्य-फलभवनं शङ्क्यम् । तथापि कालादीनामङ्गानामयथात्वेऽनुकल्पमुख्य-फलसिद्धेर्दूरत्वात् । एतेनानुकल्पैरपीदानीं मुख्यफलमङ्गीकुर्वन्तो निरस्ताः । स्मृतिपादे वेदाविरुद्धस्मृतेः प्रामाण्यस्य निर्णीतत्वात्तदुक्ता जीविकापि धर्मे उपकरोतीत्यङ्गान्तरभूतां तामाहुः ॥ तथा स्ववृत्त्ये-त्यादि ॥ तत्र वर्णवृत्तयस्तृतीयस्कन्धस्य षष्ठे, यस्तन्मुखत्वाद्वर्णानां मु-ख्योऽभूद् ब्राह्मणो गुरुरि*त्यादिभिर्गुरुत्वक्षतत्राणवार्त्ताशुश्रूषारूपा उक्ताः । यज्ञाताः सह वृत्तिभिरित्युपसंहारात् । एवमन्या अपि शा-स्त्रान्तरादवगन्तव्याः । आश्रमवृत्तीस्त्वेकादशानुसारेणाग्रे स्वयमेव वक्ष्यन्ति । वृत्त्यभावावश्यकत्वे किञ्चिदाशङ्कन्ते ॥ नन्वित्यादि ॥ सर्वना-शेनेति ॥ सर्वधर्मवैगुण्यकृतसर्वफलानाशेन ॥ आचार इति ॥ आचारो वर्णाश्रमयोः स्वाभाविको धर्मः । वृत्तिश्च तेषां स्वाभाविकी तत्तद्धर्म-पोषकत्वेन तदङ्गभूता च । अन्यथा तस्य तस्य सा नोक्ता स्यात् । एवञ्च वृत्त्यभावे स्वाभाविकधर्मव्यङ्गतायां तस्य कौण्ठ्ये वर्णाश्रमलक्षण-हान्या वर्णादिव्यपायेनाधिकारस्य कौण्ठ्यादर्द्धं फलतीति तदभावा-ऽर्थं सा आवश्यकीत्यर्थः ॥ १८१ ॥ वस्तुत इत्यादि ॥ तथाच स्ववृत्त्य-भावेऽनभ्यासादिदोषचतुष्टयान्मृत्युरुपैति । स चात्यन्तविस्मर-णरूप इति शरीरं पातयन् स्मृतिभ्रंशाद् बुद्धिं नाशयति । बुद्धिं ना-शयन्नाचारं फलितुं ददाति । यदि दोषचतुष्टयं कथङ्कारं त्यजति तदा तावन्मात्रवैगुण्येऽर्द्धं फलति । तथापि कालस्य दुष्टत्वेनाऽऽप-त्त्यभावेऽप्यनभ्यासादिसम्भवात् फलाभाव एवेत्यर्थः ॥ १८२ ॥ तर्ही-त्यादि ॥ यद्यपि कालवशाद्दोषसम्भवस्तथापि यावद्वर्णविभागोऽस्ति यावद्वेदः प्रवर्त्तते * संन्यासं चाग्निहोत्रं च तावत् कुर्यात् कलौ युग इत्यादिवाक्यबलात् फलस्यावाच्यत्वे कथं फलतीत्याकाङ्क्षायां चतुर्भिरुत्तरमाहुरित्यर्थः ॥ तदपि व्यर्थमिति ॥ शिलोञ्छवृत्त्या परि तुष्टचित्त * इति, पण्डिता बहवो राजन् बहुज्ञाः संशयच्छिदः * सदसस्पतयोऽप्येक असन्तोषात् पतन्त्यध * इत्यादिवाक्यात्तथे-त्यर्थः । अत्र शिलोञ्छवृत्तिपदं स्वस्ववर्णादिमुख्यवृत्त्युपलक्षकम् । मर्यादायां ब्राह्मणदेहं विना मुक्त्यभावस्य मुचुकुन्दप्रसङ्गे साधितत्वा-द्, ब्राह्मणवृत्तिमात्रपरं वा । मूले, तपःस्वाध्यायनिरतपदं, धर्मे महान्तं

विरजं जुषाण इत्यादिविशेषणार्थसंग्राहकम् । अग्निहोत्रादिपञ्चकपदं
[illegible]

चकि । अनापत्तौ फलावपि वृत्तित्यागस्यानभिधानात् । अतस्तदभावेऽपि ये फलमङ्गीकुर्वन्ति त एतेन निरस्ताः ॥१८३॥ अत्र किञ्चिदाशङ्क्यते ॥ तस्येति ॥ यथोक्तविलकर्तुः ॥ कृताकृतमिति ॥ सर्वाधानपक्षस्यापि शास्त्रे सत्त्वात्तदर्थेन वृत्त्यपेक्षया तदनावश्यकमित्यर्थः । एतेन तस्यावश्यकतां वदन्तो निरस्ताः । एवमत्र साधनानां श्रुत्यादिपदवाचितप्रमाणप्रमेयाभ्यां, स्वधर्मनिष्ठस्येत्यादिना साधनानां निर्णय उक्तः । अत परं, कर्मणैव हि संसिद्धिमास्थिता जनकादयः * अथापरे मनीषिणः कर्मण्यामृतत्वमानशुरित्याद्यर्थसंग्राहकेन सर्वं जानन् हरिमित्यनेन निर्विचिकित्सशास्त्रमानवदधिकारिसूचनात् तादृशां कृतानां साधनानां फलतो निर्णयं वक्ष्यन्तो यथाकर्मणेत्यादिनोक्तं फलं व्याकुर्वन्ति ॥ एतादृशस्येत्यादि ॥ तदिदं यत्किञ्चिन्न्यूनतायां नेत्याशयेनाहुः ॥ श्रौतस्येत्यादि ॥ १८४ ॥ तारतम्येत्यादि ॥ स्वल्पत्वे फलाभावस्य पूर्वमुक्तत्वात्किञ्चिन्न्यूनतया तारतम्ये तदाशङ्काया अर्थः । मूले, एतस्येति ॥ सर्वं हरिरिति ज्ञानस्य । अत्र गमकमाहुः ॥ श्रोत्रियत्वेत्यादि ॥ श्रुतौ विशेषणत्रयस्य सर्वत्रोक्तत्वात् । फलवैजात्ये विशेषणत्रय एव तारतम्यमवश्यमभ्युपेयम् । तथाच यथा श्रोत्रियत्वाधिक्यं तथा तथाऽऽधिक्यं ज्ञानस्य । यथायथाज्ञानाधिक्यं तथातथा निष्कामत्वाधिक्यमिति तथेत्यर्थः । एवञ्चाऽकामहतत्वस्य मोक्षलिङ्गत्वमङ्गीकृत्य मुक्तौ तारतम्यं वदन्तो माध्वा अप्येतेन व्यवस्थापिता बोध्याः । तदनस्यापरित्यागरूपमोक्षस्य पुराणप्रकरणे व्यवस्थापितत्वेनात्रापि तथा वक्तुं शक्यत्वात् । न तु चित्तमायानिवृत्तिरूपायां परममुक्तौ । लीलास्थत्वे तु भगवत्कृतमेव तारतम्यं, न तु साधनकृतमिति पुष्टिप्रवाहमर्यादायां स्थापितमतो न कोऽपि शङ्कालेशः । ननु श्रुतौ प्रजापतिपदेन विराट् त्रैलोक्यशरीरो ब्रह्मा समष्टिव्यष्टिरूपः संसारमण्डलस्याभ्युपगमे । ब्रह्मपदेन तु, यत्रैते प्रजापत्यानन्दा एकतां गच्छन्ति धर्मश्च तन्निमित्तो ज्ञानं चैतद्विषयम् । अकामहतत्वं च निरतिशयं यत्र स एव हिरण्यगर्भ उच्यत इत्यङ्गीकारे अक्षरानन्दपर्यन्ततायां किं गमकमित्याशङ्क्यामाहुः ॥

चतुर्मुखेत्यादि ॥ तथाचाग्रे गणनाभावात्तदानन्दस्यान्तिमत्वाङ्गीकारे ब्रह्ममुक्तिबाधिके, वेदान्तविज्ञानेति, ब्रह्मणा सह ते सर्वे इति श्रुतिस्मृती विरुद्ध्येताम्। अतो ब्रह्मानन्दपदेनाक्षरानन्द एव ग्राह्य इत्यर्थः। एवमत्र साधनतारतम्येन फलतारतम्यमुक्तम् । तत्र साधनतारतम्यं द्वेधा– प्रतिजन्मनि कर्मावृत्त्या, एकजन्मनि प्रतिवर्षं तदावृत्त्या च तयोर्मध्ये पूर्वत्र क्रमस्य सुगमः पन्थाः । द्वितीये तु कथमित्याकाङ्क्षायामाहुः ॥ एकस्येत्यादि ॥ तथाचास्मिन्नपि पक्षे क्रमस्य न विरोध इत्यर्थः ॥ १८५ ॥ एवं फलतो निर्णीय विवक्षितफलसाधनयोरुत्कर्षबोधनायोपोद्घातेनास्मिन्नपकर्षं बोधयितुम्, उक्तयोर्द्वयोरेतदधिकारिणोर्मध्ये द्वितीयस्योत्कृष्टत्वं च बोधयितुमाहुः ॥ प्रत्येकेत्यादि ॥ तत्तद्रूपेणेति ॥ तत्तल्लोकवासिमनुष्यगन्धर्वादिरूपेण। तेष्वपि तत्तद्ब्राह्मणादिरूपेण वा लोकेषु तथाविधान् भोगान् भुक्त्वा उपान्त्यानन्दपर्यन्तं तत्तद्रूपेण ध्रुवं जन्म भवेदिति मूलान्वयः। तत्र हेतुः ॥ वृत्तीत्यादि ॥ तथाच तेन कृत्वाऽदृष्टाकृष्टभूतभेदैस्तादृशमेव शरीरं जन्यते। जातं वा स्वर्गारोहणसामयिकयुधिष्ठिरादिदेहवत् संस्क्रियत इति तदर्थः। अत एव, मरुतो वै देवानां विश इति श्रुतिः। ब्राह्मणो भगवान् रुद्रः क्षत्रियो विष्णुरुच्यते * ब्रह्मा वैश्यस्तथा प्रोक्तो वासवः शूद्र उच्यते * इति स्कान्दवाक्यं च दृश्यत इति समानन्यायाद् गन्धर्वादिष्वपि तादृग्रूपत्वं न दुर्घटम् ॥ १८६ ॥

इत्यत्रत्य कारणत्वादाश्रमव्यवस्थामाह ।

एकाश्रमेण वा तिष्ठेद्विशेद्वा समनन्तरम् ॥
आयुर्भागक्रमेणैव चतुष्टयमथापि वा ॥ १८७ ॥
त्रिदण्डं परिगृह्णीत सर्वशास्त्राविरोधि तत् ॥
शास्त्रेऽपि भगवानाह दण्डस्यैकस्य धारणम् ॥ १८८ ॥
प्रतिपत्तिरियं सर्वा देहस्य ज्ञानिनो भवेत् ॥
आद्यन्तयोस्तु भिक्षाऽन्नं द्वितीये तु शिलोञ्छनम् ॥ १८९ ॥
तृतीये वन्यभेदास्तु भिक्षायामपि संयमः ॥

गुरुसेवा कर्मकृतिस्तपः पर्यटनं क्रमात् ॥ १९० ॥
स्वाध्यायेन तथा कृत्या तपसा मानसा मखाः ॥
अत्यावश्यकमेतद्धि चतुर्णां तत्पृथक्पृथक् ॥१९१॥
श्रेयान् स्वधर्मो विगुणः परधर्मात् स्वनुष्ठितात् ॥
स्वधर्मे निधनं श्रेयः परधर्मो भयावहः ॥ १९२ ॥
उत्तरोत्तरधर्मेषु निष्ठायामधिकं फलम् ॥
तस्य चेत् परमा भक्तिस्तिरोधानं भविष्यति ॥
भक्तिः स्वतन्त्रा शुद्धा च दुर्लभेति न साध्यते ॥१९३॥
अयं हि सर्वकल्पानामुत्तमः परिकीर्तितः ॥
त्रिषु स्वाश्रमधर्मेषु प्रथमे वा प्रतिष्ठितः ॥ १९४ ॥

एकाश्रमेण वा तिष्ठेदिति ॥ सर्वत्र फलं तुल्यम् । समनन्तरं ब्रह्मचर्यस्य गार्हस्थ्यम् । एवमुत्तरत्र ॥
आयुर्भागक्रमेणेति तृतीयः पक्षः । अव्यवस्थया प्रव्राजो वैराग्यस्थापकः । सर्वथा वैराग्यमङ्गमिति ज्ञापनार्थः । गृहाद् व्रजेद् वनाद् व्रजेदिति । अन्यथाऽयं पक्षो मन्वादिभिरुक्तः स्यात् । तस्मात् त्रय एव पक्षाः ॥१८७॥ संन्यासे साम्प्रतं नानाभावा वर्तन्त इति तन्निषेधार्थमाह ॥ त्रिदण्डं परिगृह्णीतेति ॥ पाक्षिकोऽपि दोषः परिहरणीय इति, सर्वशास्त्रमर्योद्धारत्वाद्भागवतस्य यद्यन्यः पक्षो भवेत् तत्र भगवान् वदेत् ॥ १८८ ॥ आश्रमाणां साचाराणां ज्ञानशेषत्वमिति सिद्धज्ञानस्य तत्परित्यागमाशङ्क्याह ॥ प्रतिपत्तिरियं सर्वेति ॥ ज्ञानिनो देहस्य तत्तदाश्रमस्थितिः प्रतिपत्तिरवश्यं कार्या । तदभावे पुनर्जन्म भवेत् । दाहाभाववत् । एवमाश्रमाग्नि-

रूपं स्वरूपयत्नं ज्ञापयितुमाह ॥ आद्यन्तयोरिति । ब्रह्मचारिसंन्यासिनोः। द्वितीयो गृहस्थः। चतुर्थे भिक्षायां नियमः। सप्तागारानसंक्लृप्तानिति। न केवलमन्ननियम एव, किन्त्वन्येऽपि नियमाः सन्तीत्याह ॥ गुरुसेवेति॥ क्रमेणैव चत्वारश्चतुर्णां मुख्याः। यज्ञाऽतिरिक्तान्येव कर्माणि द्वितीयस्य विवक्षितानि आतिथ्यपरिपालनादीनि। यज्ञास्तु चतुर्णामपि कर्त्तव्याः, परं प्रकारभेदेनेति ॥ १८९ ॥ १९० ॥ तान् प्रकारानाह ॥ स्वाध्यायेनेति ॥ यं यं क्रतुमधीते तेन तेनास्येष्टं भवतीति ब्रह्मचारिणः स्वाध्याययज्ञाः। क्रियामया द्वितीयस्य। तपोयज्ञास्तृतीयस्य। मानसाश्चतुर्थस्येति। ज्ञानिनस्तदकरणमाशङ्क्याह ॥ अत्यावश्यकमिति ॥ १९१ ॥ एतेषां हीनतामाशङ्क्याह ॥ श्रेयानिति ॥ १९२ ॥ आयुर्भागक्रमेणेत्युक्तपक्षस्य वैशिष्ट्यमाह ॥ उत्तरोत्तरधर्मेष्विति ॥ एवमुत्कर्षप्रकरणे स्वाश्रमधर्मसहितज्ञानानां मध्ये चतुर्थस्योत्कर्ष उक्तो भवति। ततोऽप्युत्कर्षमाह ॥ तस्य चेत् परमा भक्तिरिति ॥ तिरोधाननाशो ब्रह्मभावः। भक्तेरपि स्वाश्रमधर्मसहितज्ञानसहिताया एव तिरोधाननाशकत्वमुक्तं भवति। एषा भक्तिर्माहात्म्यज्ञानपूर्वकपरमस्नेहरूपा। तथाभूता सती भगवत्परिचर्यायुक्ता भवेत् स्वतः पुरुषार्थरूपा सेवा चेत् सा भक्तिः स्वतन्त्रेत्युच्यते। अयमर्थः। स्वाऽऽश्रमाचारसहितब्रह्माऽनुभवसहितमाहात्म्यज्ञानपूर्वकस्नेहो ब्रह्मभावं करोति। यद्यसौ च परिचर्यासहितो भवेत् तदा सा परिचर्या आनन्दरूपा सती त्रयोदशगुणा भवेत। तदा फलरूपायां तस्यां स्वाश्रमाचारादिकरणं फलानुभवप्रतिबन्धकमिति फलत्वेनानुभवे स्वाश्रमाचारास्त्यक्तव्याः। यथा ब्रह्मभावं गतस्य। अन्यथा कर्त्तव्या इति निष्कर्षः। एवं फलाकरणे तां सामान्यतो निरूप्य विशेषतो निरूपणाभावे हेतुमाह ॥ दुर्लभेति न सोच्यत इति ॥

सति ग्रन्थभारं भाषा, न त्वेतादृशा भक्ता इति ॥ १९३ ॥ एवं भगवच्छास्त्रे सर्वोत्तमत्वेन निरूपितमित्याह ॥ अयं हि सर्वकल्पानामिति ॥ यद्ययं भाव उत्पद्येत तदा कस्मिन्नाश्रम इति जिज्ञासायामाह ॥ त्रिषु स्वाश्रमधर्मेष्विति ॥ चतुर्थे इन्द्रियाणां दार्ढ्याभावात् । द्वितीयतृतीययोरपि दार्ढ्याभावमाशङ्क्याह ॥ प्रथमे वेति ॥ १९४ ॥

आश्रमेत्यादि ॥ एवं वैदिकं साधनं निर्णीय तत्साधनभूताश्रमव्यवस्थामाहेत्यर्थः ॥ सर्वत्र तुल्यं फलमिति ॥ यद्यपि छन्दसां लोकमारोक्ष्यन् ब्रह्मविष्टपम् * गुरवे विन्यसेद्देहं स्वाध्यायार्थं बृहद्व्रत * इत्युपक्रम्य, एवं बृहद्व्रतधरो ब्राह्मणोऽग्निरिव ज्वलन् * मद्भक्तस्तीव्रतपसा दग्धकर्माशयोऽमल * इति कर्माशयस्यान्तःकरणस्य दाहोक्त्या मुक्तिफलसूचनात् । गृहिणोऽपि संहरत्सुतावपि, न स पुनरावर्तते इति श्रावणात्, अग्निलोकानुपैति मामिति यानप्रस्थविषयकवाक्यात्, वेदान्तविज्ञानेति श्रुतौ – परामृतात् परिमुच्यन्ति सर्वे इति मुक्तिश्रावणाच्च तथेत्यर्थः ॥ एवमुक्त्वेति ॥ यद्यपि वनवासानन्तर्यं संन्यासस्य, तथापि कलौ वनवासवर्जनात् साम्प्रतं गार्हस्थ्यानन्तर्यं बोध्यम् । नन्वव्यवस्थापक्षोऽपि चतुर्थः श्रूयत इति कथं त्रय एव पक्षा इत्यत आहुः ॥ अव्यवस्थयेत्यादि, पक्षा इत्यन्तम् ॥ १८७ ॥ नानामाया इति ॥ मतः कथितपक्षा नानाप्रकाराः । त्रिदण्डाऽवश्यकत्वे युक्तिमाहुः ॥ वाचिकमित्यादि ॥ वाग्देहदण्डयोर्मौनाऽनीहयोरभावे विविदिषादशायां तत्फलरोधस्य सम्भावितत्वात्तथेत्यर्थः । ननु शास्त्रान्तरे एकदण्डपक्षोऽप्युक्त इति कथं स निषेध्यऽर्ह इत्यत आहुः ॥ सर्वेत्यादि ॥ एतच्च मूले स्पष्टम् श्रीभागवते परामृष्टं ज्ञेयम् । सर्ववेदान्तसिद्धान्तानां सारं सारं समुद्धृतमिति वाक्यात् । एतदेव पुष्यन्ति ॥ यदीत्यादि ॥ १८८ ॥ तत्परित्यागमिति ॥ आश्रमपरित्यागमित्यर्थः ॥ प्रतिपत्तिरित्यादि ॥ तथा च प्राप्तेऽपि स्वस्वाश्रमावश्यकत्वे तस्य च त्रिदण्डेऽपि तुल्यत्वात्तदंशकथने काऽपि विशेष इति सम्प्रयुक्तपक्षत्यागोऽनुचित इति भावः ॥ स्पष्टस्यार्थं ज्ञापयितुमिति ॥ वृत्तीनां वर्णाश्रमप्रयुक्तानामनेकविधत्वात् तत्तत्प्राप्तिसाधनस्यापि तथात्वात्तदाश्रमार्थं शीघ्रं फलोपायिकं तज्ज्ञापयितुमि-

पारमेष्ठ्यमित्यादिना द्वितीयस्कन्धे क्रममुक्तिरेवोक्ता । तत्र साधनादिकं तु न स्फुटमतस्तत्प्रकारमाहेत्यर्थः । संप्रज्ञातसमाधिस्थ इत्यस्य व्याख्यानं– बहिरित्यादि पश्यन्नित्यन्तम् ॥ सांख्येनात्मविभिन्नश्चागित्यादेर्व्याख्यानं– ज्ञाननिष्ठ इत्यादि, विरक्त इत्यन्तम् ॥ विकृतामित्यत्रेर्व्याख्यानं, योगज्ञाने आमरणमभ्यस्यान्निति ॥ एतादृशाधिकारे विग्रहत्यागाय वैराग्योपायत्वेन जगतो मायिकत्वज्ञानं न त्वन्यस्येत्येतदत्र ज्ञापितम् । तेन पुराणेषु मायामात्रत्वकथनमेतादृशाधिकारिणोऽर्थे इति ज्ञेयम् ।. क्रममुक्तिं प्राप्नोतीति ॥ अर्चिरादिना सत्पथितेरित्यत्र विचारितेन देवयानमार्गेण प्रजापतिलोकं प्राप्य ततोऽग्रे परब्रह्म प्राप्नोतीत्यर्थः ॥ १९७ ॥ १९८ ॥ अस्य मार्गस्य पूर्वोक्ताम्न्यूनत्वज्ञापनायाऽस्मिन्मार्गे सर्वेषां न मुक्तिरस्ति बोधयन्ति ॥ तत्र ब्रह्मलोकेत्यादि ॥ च भक्ता इत्यादि । अयं प्रकारस्तृतीये द्वात्रिंशे, ये स्वधर्मान्न दुह्यन्तीत्यारभ्य, परस्य परिचिन्तका इत्यन्तैश्चतुर्भिरुक्त । स एव, यावदधिकारमवस्थितिराधिकारिकाणामिति निर्णीतो ज्ञेयः । एवं पञ्चसु गतिष्वेका उक्ता । द्वितीयामाहुः ॥ अन्यथेत्यादिना ॥ तृतीयस्कन्ध इति ॥ द्वात्रिंश पूर्वोक्तामुक्त्वा, क्ष्माऽम्भोनिलेति द्वाभ्याम्, आद्य स्थिरचराणां च इत्यादिचतुर्भिश्च तथा निरूपणादित्यर्थ ।इय गतिः सहस्राश्वमेधयाजिनोऽपि भवतीत्याहु ॥ अश्वमेधेनेत्यादि ॥ आवृत्तितौल्याद् द्वितीय एव निवेश इत्यर्थ ॥ तृतीयमाहेति ॥ कार्यात्यये तदध्यक्षेण सहातः परमभिधानादितिसूत्रबोधितं पक्षमाहेत्यर्थः ॥ पूर्ववदिति ॥ स्थलद्वये भक्तस्यैव मुक्तिरुक्तेति तदभावेऽत्रापि पुनरावृत्तिरिति बोधनायेत्यर्थः ॥ चतुर्थमिति ॥ एकादशे सिद्धविदता भगवता, आकाश्यं पारमेष्ठ्य चेत्यादिनोक्तमित्यर्थ । पञ्चम' प्रसिद्ध एव । अत्राण्डभेदनम् आघात् पक्षाद्विशेष' आघस्याण्डमध्य एव प्राप्ते ॥ १९९ ॥ २०० ॥ २०१ ॥

केवलेन हि सांख्येन विविक्ताध्यात्मसंस्थितिः ।
नैव किञ्चित् करोमीति दृढबुद्धिरसक्तधीः ॥२०२॥
अन्तेऽप्येवं सदा ध्यायन्नियातो विमुच्यते ॥

केवलेनापि योगेन दग्धकर्ममलाशयः ॥
योगवीर्येण जितदृग् लिङ्गं भित्त्वा तथा भवेत् ॥ २०३॥
योगसांख्ये धर्महीने त्रिमार्गपरिपोषिते ॥
नरकायैव भवतः पश्चात् किञ्चित् सुखं भवेत् ॥२०४॥
ज्ञानाङ्गे चित्तरोधे च तौ प्रमाणं न सर्वथा ॥
पदार्थतत्त्वनिर्द्धारे न प्रमाणं कथञ्चन ॥
फलांशे तु प्रमत्तस्य शास्त्रमात्रपरस्य हि ॥ २०५ ॥
नरकस्त्वन्यथा भावात् तेन मूले विनिन्दितौ ॥
फलांशे तु स्तुतौ कृष्णवाक्ये भागवतेऽपि च ॥२०६॥
तदन्येषां मतानां तु सर्वथा व्यर्थता मता ॥
न तैरिष्टेन युज्येत मिथ्यार्थाऽभिनिवेशतः ॥
तस्माद्वेदोक्तमार्गेषु न स्वल्पोऽपि पतेद् बुधः ॥ २०७॥
अतः स एव सद्धर्मः सेव्यो वर्णिभिरादरात् ॥
धर्ममार्गं परित्यज्य छलेनाधर्मवर्त्तिनः ॥
पतन्ति नरके घोरे पाषण्डमतवर्तनात् ॥ २०८ ॥

एवं सांख्ययोगभक्तीनां मेलने फलमुक्त्वा केवलानां फलमाह ॥ केवलेति ॥ केवले सांख्ये द्वयमङ्गम् । संघाताद्भिन्नतया आत्मज्ञानम्, अहङ्काराभावश्च । एतयोर्निर्वाहः, नैव किञ्चित् करोमीति बुद्धिः । वैराग्यं च । एवं यावज्जीवमेकधारणया स्थितौ अविद्यातो विमुच्यते । जन्मान्तरे ज्ञानी सन्नुत्पद्यत इत्यर्थः । केवलयोगमाह ॥ केवलेनापि योगेनेति ॥ यावज्जीवं योगाभ्यासे ज्ञानो-

स्यर्थः ॥ आद्यन्तयोरित्यादि ॥ इदमेकादशीयसप्तदशाष्टादशाध्या-
ययोः स्पष्टम्। एकादशे, गृहिणो भूतरक्षेज्ये * इत्यत्रोक्तेज्या याग-
रूपा भविष्यतीति शङ्कानिरासायाहुः। यज्ञातिरिक्तेत्यादि ॥ विवक्षि-
तानीति ॥ कर्मह्रतिपदेऽभिप्रेतानि । अत्र बीजमाहुः ॥ यज्ञा इत्या-
दि ॥ १८९ ॥ १९० ॥ ज्ञानिनस्तदकरणमिति ॥ सर्वं कर्माखिलं पार्थ
ज्ञाने परिसमाप्यते * इति वाक्यादित्यर्थः । अन्यथा जरामर्याग्नि-
होत्रादिकं श्रुतौ विदुषो नोक्तं स्यादिति भाव.। अत्यावश्यकत्वे हेतु-
र्मूले उक्त.। योजना तु– यतस्तद् यज्ञकरणं चतुर्णामाश्रमाणां पृथक्
पृथग् अत एतदत्यावश्यकमिति ज्ञेया ॥ हीनतामिति ॥ ज्ञानापेक्षया
हीनताम् ॥ आयुर्भोगेत्यादि ॥ १९१ ॥ १९२ ॥ पूर्वं साधनतारतम्येन
फलतारतम्यमित्युक्तम् । तत्र व्यङ्ग्यत्वमन्तरेण कथं साधनतारत-
म्यमित्यपेक्षायां सर्वेष्वाश्रमेषु फलतौल्ये पक्षान्तराणां किं प्रयोज-
नमित्यपेक्षायां वा तदुपपादयितुम् युर्भोगेत्यादिकमाहेत्यर्थः ॥ उत्तरो-
त्तरेत्यादि ॥ वैराग्यज्ञानयोराधिक्येनेति शेषः ॥ चतुर्थस्येति ॥ सं-
न्यासाश्रमीणज्ञानस्य। अयं चोत्कर्षोऽक्रमेण ब्रह्मणा सह वा क्रमेण त-
त्र पूर्वं वा मुक्तिसम्पादकत्वरूपो बोध्यः । एवं वैदिकसाधनानां
क्रममुक्तिरूपं फलमुपसहृतम् ॥ ततोऽपीत्यादि ॥ एकादशस्कन्धा-
द्युक्तरीत्या स्वाश्रमधर्मस्य भक्त्युत्पादकत्वेन भगवद्धर्मत्वे केवल-
ज्ञानसहितात्तस्मादुत्कर्षमाहेत्यर्थ. ॥ तस्येति मूलस्थपदसूचितम-
र्थमाहुः ॥ भक्तेरपीत्यादि ॥ एवमाश्रमधर्माणां भगवद्धर्मत्वे फलमु-
क्तम्। अत परमितोऽप्युत्तमां कक्षां वक्तुं भगवदुक्तमलिङ्गाश्रम-
पक्षं संग्रहीतुं प्रथमं विहितभक्तेः स्वरूपं तच्छुद्धत्वस्यातन्त्र्ययोः स्व-
रूपं चाहुः ॥ एवेत्यादि ॥ एवेति विधापर्वरूपा. ॥ तयाभूतेत्यादि ॥
आद्यन्तयोरित्यादिकाधिकाद्वयोक्तवृत्तिचतुष्टयधर्मचतुष्टयमखचतुष्ट-
ययुक्ता। एवं द्वादशगुणा सा भगवत्परिचर्या युक्ता भवेत्तदा सती
शुद्धा सापि स्वत पुरुषार्थरूपा सेवा चेत् सा मोक्ष स्वतन्त्रेत्यर्थ.।
अत्राधिकारिणं वक्तुमुक्तार्थं संगृह्णते ॥ अयमर्थ इत्यादि ॥ त्रयोदशा-
गुणेति ॥ उक्तद्वादशगुणब्रह्मानुभवदवोत्तरम् आनन्दरूपतया परि-
परिचर्या स्वतन्त्रा सती तथेत्यर्थः ॥ फलत्वेनानुभव इति ॥ तादृश-
चर्याया एव फलत्वेनाऽनुभव इत्यर्थ ॥ निष्कर्ष इति ॥ आयुर्भो-
गक्रमेणेति पक्षोऽयं निष्कर्ष इत्यर्थः ॥ १९३ ॥ परमित्यादि ॥ यद्यपि

दौर्लभ्यं तदोल्लेखेऽपि किं प्रयोजनमित्याशङ्कायां तत्कथने हेतुमाहे- त्यर्थः । निरूपितमिति पाठे, भजनमिति शेषः ॥ उत्पद्यन्तीति ॥ घर- नस्य भगवदिच्छाधीनत्वादाश्रमान्तरे उत्पद्येतेत्यर्थः ॥ आश्रम इति ॥ स्यातव्यमिति शेषः ॥ चतुर्थ इत्यादि ॥ भिक्षासंयमाश्रयेत्यर्थः ॥ [illegible]

[illegible]

स्यन्ति नैषां सिद्धिरनद्दनतामिति वाक्याद् ब्रह्मचारिणां यथाशानन- स्थियस्वामर्थ्यात् तथेत्यर्थः । एवमत्र वैदिकमार्गस्य साधनपुरःसरं फलपर्यन्तनिरूपणे वैदिकस्य धर्मस्य भक्तिजनकत्वमेव परमोत्क- र्षः । वैदिक्या भक्तेश्च धर्मसाहित्य एव तिरोधानानाशकत्वम् । तेन, उभयोरङ्गाङ्गिभावः सापेक्षत्वं चेति सिद्धम् । निरपेक्षा तु वैदिकी- दानीं दुर्लभेति च । एवं प्रमाणानुरोधिनो वैदिकप्रमेयस्य बलं विचा- रितम् ॥ १९४ ॥

अतः परं पूर्वप्रकरणे, सांख्यो बहुविध इत्यादिना यौ सांख्य- योगावुक्तौ तयोरेव गीतादावुक्तत्वेन प्रमाणानुरोधिप्रमेयत्वात्तद्बलं विचारयितुं तयोः सापेक्षतायाः, योगसांख्ये तु ये मुख्ये * इत्यत्र पूर्वमुक्तत्वेऽपि फलपर्यन्ताख्याने विना बलेयत्तानिश्चयाऽभावात् तयो- रपि मिलितयोः केवलयोश्च फलतो निर्णयं वदन्ति ॥

न्यासे सर्वपरित्यागी नष्टाहंममताभिदः ॥
योगमुत्तममास्थाय लोकातीतो बहिर्दृशिः ॥ १९५ ॥
असंप्रज्ञातयोगस्थो देहत्यागे विमुच्यते ॥
तादृशस्य बलाद्वापि देहत्यागो विमुक्तिदः ॥ १९६ ॥
संप्रज्ञातसमाधिस्थः सांख्येनात्माग्निभिन्नदृक् ॥
विकृतं प्रकृतेः कार्यं मायेति त्यक्तविग्रहः ॥ १९७ ॥
एवं योगं च सांख्यं च समास्थापयति कृती ॥
योगेन त्यक्तदेहश्चेत् क्रमान्मुक्तिं स विन्दति ॥ १९८ ॥

दये योगबलेनैव देहं त्यक्त्वा अविद्यातो विमुच्यते । भक्तिसं-
हितश्चेन् पूर्वमेवोक्तः । एवं साङ्ख्ययोगयोः सहितयोः केवलयोश्च
फलमुक्त्वा निषिद्धयोः फलमाह ॥ योगमांख्ये इति ॥ धर्ममा-
र्गाद् भ्रष्टे । तत्सिद्ध्यर्थं कदाचिन्निषिद्धमपि कुरुतः । अपेय-
पानेन नाडी शुद्धा भवतीति चिमार्गे परिपोषिते पश्चाज्जन्मा-
न्तरे ॥ २०२ ॥ २०३ ॥ २०४ ॥

नतु, यत्सांख्यैः प्राप्यते स्थानं तद्योगैरपि गम्यते * इति ।
अपिचेदसि पापेभ्यः सर्वेभ्यः पापकृत्तमः * सर्वं ज्ञानप्लवेनैव वृ-
जिनं सन्तरिष्यसीत्यादिवाक्यैः सांख्ययोगयोः स्तुतत्वात् कथं
विकर्ममात्रेण नरकः । योगेनैव दहेद्देह इति वाक्याचेत्याशङ्क्या-
ह ॥ ज्ञानाङ्ग इति ॥ सांख्ययोगशास्त्रद्वयं पुराणमूलकमङ्गत्वेन
निरूपितम् । तदपि परम्परया नित्यानित्यवस्तुविवेकस्य ज्ञानाऽङ्ग-
त्वम् । तथा चित्तनिरोधस्य ज्ञानस्थापकत्वम् । अन्यथा ज्ञानं
स्तुतं भवतीति तयोरङ्गं सांख्ययोगौ, न तु सर्वथा तत्प्रमाणम् ।
अप्रमाणांशं स्पष्टयति ॥ पदार्थतत्त्वनिर्द्धार इति ॥ फलितमाह ॥
॥ फलांशे त्विति ॥ योऽन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते *
किं तेन न कृतं पापं चोरेणात्मापहारिणेति भगवतोऽन्यथाचि-
न्तनान्नरकः । तत्र विकर्म सहायभूतम् । अत एव सूत्रकारेण
शिष्टापरिग्रह उक्तः । भगवद्वाक्यस्य गतिमाह ॥ फलांशे तु स्तुता-
विति ॥ नित्यानित्यवस्तुविवेके चित्तनिरोधे च स्तुतौ तदन्येषां
मायावादादीनां साङ्ख्योपजीवकानां सर्वथा व्यर्थता, तत्फलं न
किञ्चित् । विकर्मणा अन्यथाभावनाच्च नरकः । तस्माद्वेदातिरि-
क्तमार्गाः स्वतन्त्रं न फलसाधकाः । किन्त्वङ्गभावमेव प्राप्य या-
दृशं प्रमेयं वेदोक्तं तादृशमेव साधयन्तः फलाय भवन्तीति नि-
ष्कर्षः ॥ २०५ ॥ २०६ ॥ २०७ ॥ तदभावेऽपि वेदोक्तमार्गेण

केवलेनापि निस्तार इत्यादि ॥ अतः स एव सद्धर्मैरिति ॥ वेदवि-
रोधे नरक इत्यादि ॥ धर्ममार्गं परित्यज्येति ॥ तत्र हेतुः— पाप-
रूपतवचनादिति ॥ पापत्वेपस्वीकारात् ॥ २०८ ॥

केवलानामित्यादि ॥ पूर्वोक्तेष्वपि जघन्याधिकारे केवलयोः सां-
ख्ययोगयोरुपयोग इति फलद्वारा तयोर्निर्णयं वक्तुं केवलानां फलमा-
हेत्यर्थः ॥ संघातात्भिन्नतया आत्मज्ञानमिति ॥ एतेन विविक्ते अध्या-
त्मनि संस्थितिर्यस्येति मूले समासो ज्ञापितः । शेषमतिरोहितार्थम् ॥
भक्तिरहित इति ॥ योग इति शेषः । एवमेव सांख्यमपि ज्ञेयम् । एवं
सांख्ययोगयोर्विज्ञापकरूपभक्तिसाहित्ये पूर्वोक्तरीत्या मुक्तिजनकत्वं,
तदभावे त्वविद्यायियोग्यकत्वमिति फलं निर्णीतम् ॥ निषिद्धयोरित्या-
दि ॥ एतद्विरुद्धं यत् सर्वं न तन्मान्यं कथञ्चनेति पूर्वमुक्तत्वेन प्रसङ्गा-
त्तदुपायोः फलमाहेत्यर्थः । एते पाशुपतोक्ते धर्मे । कलयोन्यतरत्व
सांख्यं शाक्तो मार्गं * इत्यग्रे वक्ष्यमाणत्वात् । कापिलसांख्यप्रवचने
पातञ्जले योगे च निषिद्धाचरणोक्त्यभावात । एवं तदुभयं निर्णीतम् ॥
२०२ ॥ २०३ ॥ २०४ ॥ अतः परं पुराणादिषु सांख्ययोगयोर्निन्दादेः
प्रशंसायाश्च दर्शनात्पूर्वोक्तं फलं निश्चेतुं न शक्यत इति तन्निरासार्थं,
निन्दादेरर्थपरतां वदन्ति ॥ नन्वित्यादिना ॥ अङ्गत्वेनेति ॥ मोक्षसाधना-
ङ्गत्वेन ॥ तयोरिति ॥ नित्यानित्यविवेकचित्तनिरोधयोः ॥ सांविति ॥
योगाद्रित्यादाम् । मूले, फलांशे तु प्रमत्तस्येत्यादि ॥ पूर्वोक्ते, फलांशम-
नुसंधानस्य मुक्तिसाधकत्वप्रसिद्ध्या तन्मात्रनिष्ठस्येत्यर्थः ॥ अन्यथा
मार्गोऽन्यथा साधनमापिज्ञम्याद् यत् , एतान्वृणवन्ति ॥ येऽन्ये इत्यादि ॥
मूल इति ॥ श्रीभागवते । येऽन्येऽरविन्दाक्ष विमुक्तमानिनस्त्वय्यस्तभा-
वादविशुद्धबुद्धयः * आरुह्य कृच्छ्रेण परं पदं ततः पतन्त्यधोऽनादृत-
युष्मदङ्घ्रयः * विदुरकाण्डाय मुहु कुर्योगिनामित्यादौ । नारसिंहे च ।
विप्रधरस्कणमस्तांकरांकेदं शापलपञ्चशिखाक्षपादवादात् * महदपि
सुविचार्य लोकतन्त्रं भगवदुपास्तिम् ऋते न सिद्धिरस्तीत्यत्र । इयञ्च
निन्दा, न, न हि निन्दान्यायेन विधेयस्तुत्यर्था किन्तु प्राशंसीति वे ध-
नायाहुः ॥ अत एवेत्यादि ॥ अविरोध तर्कपादे, एतेन शिष्टापरिग्रहा
व्याख्याता इति सूत्रणोक्त इत्यर्थः । भगवद्भाष्यस्येत्यादि । ननु कापि-
ले पातञ्जले च विकर्मोक्त्यभावाद्व्यासपादैर्योगभाष्यकरणाच्च कथं तद्वा-

क्येषु पूर्वोक्तेषु स्तुतत्वाच्च नैवं वक्तुं युक्तमित्याकाङ्क्षायां तन्मूलभूतभगवद्वाक्यस्याभिप्रायमाहेत्यर्थः ॥ नित्यानित्येत्यादि ॥ तथाचैतदंशे स्तुतत्वादेव भाष्यकरण, तत्रापीश्वरत्वादित्वात् । अत एव न सांख्यस्य । अनीश्वरत्वादित्वात् । अन्यथा, आनुमानिकादिसूत्रेषु न सांख्यं दूषयेत् । एतेन योग प्रयुक्त इत्यपि न सूत्रयेत् । अतः फलाऽजनकत्वान्निन्दादि । एकांशेनोपयोगाच्च स्तुत्यादीत्युभयमप्युपपन्नमिति भावः । एवं सर्वेषां मन्मार्गाणां निर्णय उक्तः । अत पर तदाभासानामाहुः ॥ तदन्येषामित्यादि ॥ सर्वथेति ॥ प्रमाणाभासमूलत्वात् प्रमेयरहितत्वतः * साधनादिविरोधाच्च वैयर्थ्यं तेषु बुध्यतामित्यर्थः । एवं प्रासङ्गिकनिरूपणेन एतेषां बलं सिद्धं तदाहु ॥तस्मादित्यादि ॥ मूले, न स्वल्पोऽपि पतेदिति ॥ सुतराम् अल्पः साधनकरणे अशक्तोऽपि बुध –उक्तरीतिकज्ञानवांश्चेत् तदा न पतेत् । न हि कल्याणकृत् कश्चिद् दुर्गतिं तात गच्छतीति * भगवदुक्तन्यायस्य तत्रापि समानत्वाच्च पतेदित्यर्थः ॥ २०५ ॥ २०६ ॥ २०७ ॥

तदभाव इत्यादि ॥ ननु योगाद्यभावे चित्तैकाग्र्याद्यभावाद्यशक्तायां वैदिकेनापि मार्गेण न फलसिद्धिरिति शङ्कायां पूर्वोक्ते युक्तेरुक्तत्वात् केवलेन वैदिकेन फलसिद्धिमाहेत्यर्थः ॥ वेदविरोध इत्यादि ॥ ननु वैदिकाभासमार्गे इष्टप्राप्त्यभावेऽपि,न हि कल्याणेति गीतोक्तन्यायेनानिष्टनिवृत्तिस्तु भविष्यतीतिशङ्कायां तन्निवृत्त्यर्थं युक्तिपूर्वकं ततो महदनिष्टमाहेत्यर्थः ॥ पापवेशस्वीकारादिति ॥ एतेन ये मूर्खा अनापद्यपि म्लेच्छादिवेशभाषादिकं रोचयन्ते स्वीकुर्वन्ति च तेऽपि तथेति बोधितम् ॥ २०८ ॥

अत परमिदानीं वैदिकमार्गस्योत्सन्नकल्पत्वे वक्तुं गीताद्युक्तस्य प्रमाणानुरोधिप्रमेयस्य, कालादिसाधनापेक्षारहित इत्यत्रोक्तं यद्बलं तद्विचारयन्ति ।

अधुना तु कलौ सर्वे विरुद्धाचारतत्पराः ॥
स्वाध्यायादिक्रियाहीनास्तथाऽऽचारपराङ्मुखाः ॥२०९॥
क्रियमाणं तथाचारं विधिहीनं प्रकुर्वते ॥
विक्षिप्तमनसो भ्रान्ता जिह्वोपस्थपरायणाः ॥ २१० ॥

ब्रात्यप्रायाः स्वतो दुष्टास्तत्र धर्मः कथं भवेत् ॥
षड्भिः संपद्यते धर्मस्ते दुर्लभतराः कलौ ॥ २११ ॥
अथापि धर्ममार्गेण स्थित्वा कृष्णं भजेत् सदा ॥
श्रीभागवतमार्गेण स कथञ्चित्तरिष्यति ॥ २१२ ॥
अत्रापि वेदनिन्दायामधर्मकरणात् तथा ॥
नरके न भवेत् पातः किन्तु हीनेषु जायते ॥ २१३ ॥
पूर्वसंस्कारतस्तत्र भजन् मुच्येत जन्मभिः ॥
अत्यन्ताभिनिवेशश्चेत् संसारे न भवेत्तदा ॥
एतावन्मात्रताऽप्यस्ति मार्गेऽस्मिन्मुरवैरिणः ॥२१४॥

एवं सांख्ययोगद्वारा सर्वाणि मतानि दूषयित्वा, वेदविरोधाभावेऽपि भक्तिमार्गे ब्राह्मणविरुद्धवेषाभावेऽपि प्रकारभेदोऽस्तीति कस्य चिच्छङ्का स्यात् पाषण्डमार्गोऽयमपीति । तन्निराकरणार्थं प्रकारान्तरे हेतुं वदन् भक्तिमार्गं प्रपञ्चयति ॥ अधुना त्रिविधे, त्रिभिः ॥ कालदोषाच्छक्तिह्रासे वेदाभावात् सर्वधर्माभावः ॥२०९॥२१०॥ २११ ॥ तर्हि किं विधेयमित्याकाङ्क्षायामाह ॥ अथाऽपीति ॥ पाषण्डमतस्वीकारमकृत्वा यथाशक्त्यग्निहोत्रादिकं कुर्वन् सदा कृष्णं भजन् भवति । भगवदुक्तेनैव मार्गेण । ततो मुख्यधर्माभावान्न फलं, भगवद्भजनाच्च न पातः, किन्तु कथञ्चित् काले तरिष्यति । कलिदोषाभिभूतो न भविष्यतीत्यर्थः ॥ २१२ ॥

अत्र बाधकद्वयं त्यागार्थमाह ॥ अत्रापि वेदनिन्दायामिति ॥ भगवन्मार्गे स्थित्वा यदि वेदानाम् अप्रामाण्यं वदेत् कथञ्चिदपि, तदा भगवन्नाम्नो नरकविरोधित्वान्न नरके पातः । किन्तु तृतीयमार्ग-

साधनत्वाद् हीनेषु जायते । शूद्रादिषु सम्भवति । अतो दृश्यते नीचयोनिषु भगवद्भक्तानां जन्म । तस्मादेतद्द्वयमकृत्वा भगवान् सेव्यः ॥ २१३ ॥

शूद्रादियोनौ जातस्य किं फलमित्याकाङ्क्षायामाह ॥ पूर्वसंस्कारत इति ॥ संस्कारवशाद्भगवद्भजने जायमाने तस्मिन् देहे वेदादीनां स्मरणाभावान्निन्दाभावे तुष्टः सन् भगवान्मोचयेदित्यर्थः । तत्राप्येकं बाधकमाह ॥ अत्यन्ताभिनिवेशश्चेदिति ॥ संस्कारस्य दुर्बलत्वे ज्ञानाभावात्संसारेऽभिनिवेशो भवति । ततो दृढभजनाऽभावान्न मुच्यत इत्यर्थः । अनेन वेदनिन्दया पुनरावृत्तिरुक्ता । पुनः शुद्धसाधनेन जायमानां मुक्तिं न निवारयति । अतो वेदनिन्दाऽभावे भक्तिमार्गः समीचीनः । ननूत्कर्षासहनेन कथं वेदं न निन्देदतः सोपाय एवायं मार्ग इत्याशङ्क्याह ॥ एतावन्मात्रताऽप्यस्तीति ॥ अनिन्दायां मोक्षः ॥ निन्दायामपि न नरकादिः । वैदिकातिरिक्तमतेषु भगवन्मार्गे एतावदपि फलम् इति, न तु सांख्यादाविति तेभ्य उत्कर्षः ॥ २१४ ॥

एवं सांख्येत्यादिना । प्रकारभेद इति ॥ वैदिकायिलक्षणः शंखचक्रधारणादिरूप ॥ प्रपञ्चयतीति ॥ उत्कर्षबोधनमुखेन विस्तारयति । मार्गस्य बुद्धिस्थत्वाद्वर्तमानः प्रयोगः ॥ त्रिभिरिति पदं, हेतुं यदभित्यनेन संबद्ध्यते । तत्राचारप्रभवो धर्म इति शौचाचारविहीनानां समस्ता निष्फलाः क्रिया इत्यादिवाक्याद्यथाकारी यथाचारी तथा भवतीति श्रुतेश्च श्रौतधर्मस्य स्मार्त्ताचारसापेक्षत्वाद्विरुद्धाचरणेन पापसंभवाद्यदिदानीं क्रियमाणस्य तस्याभासतैव, न तु धर्मत्वमिति मूले प्रपञ्चयित्वा तत्र सिद्धमर्थं हेतुपूर्वकमाहु. ॥ कालदोषेत्यादि । तथा च यत एवमधुनाऽतो वेदोक्तप्रकारस्येदानीं व्यङ्गचाग्स न सिद्ध्यतीति नेदानीं स बलिष्ठ इति भावः । एतेन प्रकारान्तरादरणे हेतुरुक्तः । ॥ २०९ ॥ २१० ॥ २११ ॥ तर्हीत्यादि ॥ नन्वेवं सति स त्याज्य इत्यायाति,तथा सति सर्वथैव पाषण्डत्वसंभव इति किं विधेयमित्याकाङ्क्षा-

थाम् एकादशे यो धर्मेण भगवद्भजनप्रकारो भगवतोक्तस्तस्यैवानी-
मयाऽकत्वात्तदनुकल्परूपं यथाशक्तिकरणपक्षमादृत्य भगवदुक्तं क-
र्तव्यमित्याहेत्यर्थः ॥ पाषण्डेत्यादि ॥ मायावादिमतस्य पाषण्डरूपता-
याः पूर्वमुपपादितत्वादग्रे वक्ष्यमाणत्वाच्च तन्मतस्वीकारमकृत्वा य-
थाशक्ति स्वधर्मकरणपक्षस्यापि स्थाप्यत्वात् स्ववर्णाश्रमप्राप्तमग्निहो-
त्रादिकं भक्तिमार्गाङ्गत्वेन कुर्वन्, यद्यनीशो धारयितुं मनो ब्रह्मणि
निश्चलम् * अपि सर्वाणि कर्माणि निरपेक्षः समाचरेत्यादिवाक्यद्वये
भगवतोक्तेन भगवदाश्रितस्य निरपेक्षतया सर्वकर्माचरणश्रद्धापूर्वक-
भगवत्कथाश्रवण—सङ्कीर्तन—लीलास्मरण—जन्माभिनय—सुहृद्भगव-
दर्थधर्मकामार्थाचरणरूपेण मार्गेण यो भगवन्तं सदाऽविच्छेदेन भज-
ति स उक्तरीत्या धर्मफलस्य पातस्य चाभावे ततो भगवदुक्तकरणा-
त्तथा भविष्यतीत्येतत्कर्तव्यमिति भावः । एतेन कालादिसाधनापेक्षा-
रहितत्वं विचारितम् । एवञ्च कलिदोषानभिभवे कलेः स्वल्पसाध-
नेन महाफलप्रदत्वस्याभाव्यत्वादानुगुण्ये, एतादृशस्य फलं जीवन्मु-
क्तिः प्रतिभाति । तृतीयस्कन्धे पञ्चविंशे, इमं लोकं तथैवामुमिति श्लो-
कद्वये प्रथमाधिकारिणस्तथाभावप्रतिपादनात् । इतोऽधिकाधिकारे तु
तत्रैव, अथो विभूतिं ममेत्यादिश्लोकद्वयोक्तो वैकुण्ठे भोगः 'यः सेवाफ-
लविषयत्वे सेवौपयिकदेहो वा वैकुण्ठादिष्विति'पनेनोक्त इति पर्यवसाने
ज्ञेयम् ॥२१२॥ अत्रेत्यादि ॥ ननु यद्येवं तर्हि सर्वथा तरिष्यत्येवेति व-
क्तव्यं, न तु कथञ्चित्तरिष्यतीत्याशङ्कायां बाधकद्वयस्याभावेऽपि तत्त्वा-
देवमुक्तमित्याशयेन श्रीभागवतोक्तमार्गे बाधकद्वयमाहेत्यर्थः ॥ भ-
गवन्मार्ग इत्यादि ॥ वेदनिन्दया नरक इति चतुर्थस्कन्धे भृगुशापे
सिद्धम् । भगवन्नाम्नो नरकविरोधित्वं च षष्ठेऽजामिलोपाख्याने ।
एवं शास्त्रद्वयविरोधे त्रिशङ्कुन्यायो भवतीत्यर्थः ॥ कथंचिदिति ॥ स्व-
रूपार्थसाधनफलेषु ॥ तृतीयमार्गसाधनत्वादिति ॥ यमलोकगमना-
नुकूलो यो जायस्वेत्यादिश्रुत्युक्तो मार्गस्तत्साधनत्वादित्यर्थः ॥२१३॥
शूद्रेत्यादि ॥ ननु यदि कदाचिदेवं स्यात्तदा किं मज्जेत् पातालं प्र-
विशेत्तु नेति शङ्कां हृदि कृत्वा तादृशस्य फलमाहेत्यर्थः । मूले जन्म-
भिरिति बहुवचनेन बहुकालमन्तरायो भवतीत्युक्तम् । जातेऽप्यन्तराये
पुनः फलाप्तौ किं बीजमत आहुः । संस्कारेत्यादि ॥ तथापीत्यादि ॥
तर्हि परिणाममुपपद्यते विलम्बोऽप्यनुष्ठ एवेति शूद्रादियोनावपि किं

बाधकमिति शङ्कायां शूद्रादियोनौ संस्कारेण भजनेऽपि बाधकमाहे-
त्यर्थः । कारिकाद्वयसिद्धमर्थमाहुः ॥ अनेनेत्यादि ॥ न निवारयतीति ॥
पूर्वजन्मीना वेदनिन्देति शेषः । यद्यपि मूले वाशिष्ठलिङ्गोक्तशाण्डि-
ल्योपाख्याने हृदिस्थत्याऽधर्मस्याप्यघसंस्कत्वमुक्त, तथापि, अपिचेत्
सुदुराचार इतिवाक्यात्तस्य दौर्बल्यं, स्वपादमूलं भजतः प्रियस्य
त्यक्तान्यभावस्य हरि: परेशः । विकर्म यच्चोत्पतितं कथञ्चिद् धुनोति
सर्वं हृदि संनिविष्ट इति वाक्याच्च बुद्धिपूर्वकमेव तत्करणे पुनरनुग्र-
वृत्तायां च तस्य तथात्वं न स्यन्यथापीति ज्ञापनाय विवृतौ तदनु-
हेतुत्व इति ज्ञेयम् । एवं समीचीनत्वे किञ्चिदाशङ्का परिहरन्ति ॥ ननू-
त्कर्षेत्यादि ॥ उत्कर्षासहनेनेति ॥ भगवन्मार्गापेक्षया वेदमार्गोत्कर्ष-
श्रुतौ तदसहनेन ॥ आहेति ॥ मार्गान्तरेभ्य उत्कर्षमाहेत्यर्थः ॥ तेभ्य
उत्कर्ष इति ॥ ते तु विमार्गपरिपोषिता नरकायैव भवन्त्ययं तु तथात्वे-
ऽपि न तथेति प्रारब्धदशायामस्य सापायत्वेऽपि तेभ्योऽस्य उत्कर्ष
इत्यर्थः । प्रारब्धदशा चात्र, यद्यनीश इत्यनेनानुकल्पनया कथनेऽपि,
लभते निश्चलां भक्तिमिति फलोक्त्या ततः पूर्वभावित्वेन तदानीं भक्त्य-
ऽभावाच्च ज्ञेया । गीतायामभ्यासेऽप्यसमर्थोऽसीति वाक्यद्वयेऽनुक-
ल्पताबोधनादपि तथा ॥ २१४ ॥

सर्वत्यागेऽनन्यभावे कृष्णमात्रैकमानसे ॥
सायुज्यं कृष्णदेवेन शीघ्रमेव ध्रुवं फलम् ॥ २१५ ॥
एतादृशस्तु पुरुषः कोटिष्वपि सुदुर्लभः ॥
यो दारागारपुत्राप्तान् प्राणान् वित्तमिमं परम् ॥२१६॥
हित्वा कृष्णे परं भावं गतः प्रेमप्लुतः सदा ॥
त्रिशिष्टरूपं वेदार्थः फलं प्रेम च साधनम् ॥२१७॥
तत्साधनं नवविधा भक्तिस्तत्प्रतिपादिका ॥
गीतासंक्षेपतस्तस्या वक्ता स्वयमभूद्धरिः ॥२१८॥
तद्विस्तारो भागवतं सर्वनिर्णयपर्वकम् ॥

व्यासः समाधिना सर्वमाह कृष्णोक्तमादितः ॥ २१९॥
मार्गोऽयं सर्वमार्गाणामुत्तमः परिकीर्त्तितः ॥
यस्मिन् पातभयं नास्ति मोचकः सर्वथा यतः ॥२२०॥
वर्णाश्रमवतां धर्मे मुख्ये नष्टे छलेन तु ।
क्रियमाणे न धर्मः स्यादतस्तस्मान्न मोचनम् ॥२२१॥

भक्तिमार्गे मुख्यानां फलमाह ॥ सर्वत्याग इति ॥ अन्तर्बहिः सर्वत्यागः, स्वामित्वेन कृष्ण एव सर्वदा मनोनिवेशनम् । अभ्यासेन तद्भवति । अन्येषां देवानां तद्विभूतित्वेन तत्सेवकत्वेन वा सन्मानने यदि स्फुरति । एवं देह पातपर्यन्तं कृष्णैकमानसस्य सायुज्यं शीघ्रमेव भवति । कायवाग्विनियोगाभावेऽपि स्वस्नेहाभावेऽपि मनोमात्रस्थितौ फलमेतदित्यर्थः ॥ २१९ ॥ ततोऽपि विशेषमाह ॥ एतादृशास्त्वति ॥ पूर्वोक्तो लोके संभवत्यपि । एतादृशास्तु दुर्लभः । योऽग्रे वक्ष्यते । भागवते नारायणपरः महात्मैव लोके दुर्लभ उक्तः । ज्ञानमिश्रो भक्तः प्रेमयुक्तस्तोऽपि दुर्लभः । तत्रापि यदा प्रेमस्तुतः । तस्य भगवत्सायुज्यं भवतीति किं वक्तव्यमित्यर्थः । एवं भक्तिमार्गे फलमुपपाद्य सर्वमेव मार्गमुपपादयति ॥ विशिष्टरूपमित्यादिना, एतन्मार्गद्वयं प्रोक्तमित्यन्तेन ॥ अत्र प्रमेयं विशिष्टरूपम् । यस्यैकैकोंऽशः काण्डद्वयेन प्रतिपाद्यते स ज्ञानक्रियोभययुतः । स एव च फलम् । तत्रापि साधनं च प्रमेव । तत्साधनं नवविधा भक्तिः । श्रवणादिव्यतिरेकेण संस्कारवशात् फलकामनया वा जायमाना प्रीतिर्गौणी स्यात् । श्रवणादीनां साधनत्वे प्रमाणं गीता । भक्त्या त्वनन्यया शक्य इति साधनसाध्यरूपामेकीकृत्याह । गीताया अपि प्रामाण्यम् । फलत्वाचयात् । कृष्णस्य फलरूपत्वं परमानन्दरूपत्वात् । पुरुषोत्तमत्वा-

द । गीतार्थं संदिग्धं मत्वा विस्तरेण कथनार्थं भागवतं तेनैव रूपान्तरेण कृतम् । प्रमाणादीनां चतुर्णामप्येकरूपत्वात् सर्वमार्गापेक्षया अयमुत्तमो मार्गः । तथाहि । प्रमाणं भगवद्वाक्यम् । वाक्येन प्रवृत्तः साधनमलाप्यन्नपि भगवता कृतार्थीक्रियते । प्रमेयपरिज्ञानं च फलानुभवरूपम् । साधनं च फलादप्यधिकम् । फलं च ज्ञानकर्मादिसाध्येभ्योऽप्यधिकमिति । अत एवाऽस्मिन् मार्गे पातभयं नास्ति । प्रमाणप्रवृत्तिमारभ्य भगवतो रक्षकत्वात् । तत्र हेतुः— मोचकः सर्वथा यत इति ॥ स हि सर्वानेव येनकेनचिदुक्तप्रकारेणापि प्रवर्त्तमानान्मोचयति । मोचकस्वभावत्वात् । तत्र स्ववाक्यानुगतान् कथं न मोचयेत् ॥ किञ्च यदा वेदादीनां कालवशादसाधकत्वं ज्ञातं तदाऽयं मार्गो भगवता कथितः । तेनेदानीं नान्यो मार्गः फलाय ॥ २१६ ॥ २१७ ॥ २१८ ॥ २१९ ॥ २२० ॥ २२१ ॥

भक्तीत्यादि ॥ एवं जघन्याधिकार उत्कर्षे फलत उक्त्वा, ये तु सर्वाणि कर्माणि मयि सन्न्यस्येत्यादिवाक्यचतुष्टयोक्तमध्यमाधिकारे भगवता, न चिरादुद्धारस्योक्तत्वेनापायशङ्काभावात्फलतो वेदमार्गसाम्यरूपमित उत्कर्षं वक्तु भक्तिमार्गे प्रवृत्तानां मध्यमाधिकारिणां फलमाहेत्यर्थं । ये त्वित्यादिगीतावाक्यतात्पर्यमाहु. ॥ अन्तर्बहिरित्यादिना ॥ गीतायामनन्येनैव योगेनेत्यस्यार्थो न स्फुट इति तमाहुः स्वामिस्थेनेत्यादि ॥ अभ्यासयोगप्रकारमाहुः ॥ अन्येषामित्यादि ॥ ननु भगवता तादृशस्य शीघ्रं स्वप्राप्तिकथनात् फलतो विचारे उत्तम तैव प्रतीयते, न तु मध्यमत्वमित्यत आहु ॥कायेत्यादि । तथाच मार्गोत्कर्षसाधनायैवं फलं भगवता प्रतिज्ञापूर्वकमवधारणार्थमुच्यते । न तावताधिकारस्योत्तमत्वं भक्तिपदस्याभावादिति भाव ॥ २१५ ॥ ततोऽपीत्यादि । एतद्गमकं वक्तुमिति शेष. । तथाच यतो वक्ष्यमाणस्य दौर्लभ्यं, तास्येत्यतोऽस्य मध्यम एवेति भाव । दौर्लभ्यमेव विशदीकुर्वन्ति । भागवत इत्यादि ॥ षष्ठस्कन्धे चतुर्दशाध्याये । देवानां शुद्धसत्त्वानामृषीणां चामलात्मनाम् * भक्तिर्मुकुन्दचरणे न प्रायेणोप-

मित्यत आहुः ॥ श्रवणादीनामित्यादि ॥ श्रुत्यपेक्षया तथैवेत्यमाशङ्क्याहुः ॥ गीताया अपीत्यादि ॥ फलवाक्यादिति भावप्रधानो निर्देशः। फलवाक्यत्वादित्यर्थः। गीताविस्तरात्मके श्रीभागवते किमुक्तमित्यपेक्षायां मार्गोऽयं सर्वमार्गाणामित्यस्यार्थमाहुः ॥ प्रमाणादीनामित्यादि ॥ कथमित्यपेक्षायां तदुपपादयन्ति ॥ तथाहीत्यादि ॥ फलाद्यप्यधिकमिति ॥ फलवशीकारकत्वादनुभवाच्च तथेत्यर्थः। अत्रैतद्धृदयम्, गीतायां प्रश्ने, शाधि मां त्वां प्रपन्नमिति वाक्यादात्मनिवेदिनेऽर्जुनाय कर्मयोगं सांख्ययोगादिकं च सपरिकरं द्वितीयादिभिः सप्तभिरुक्त्वा, नवमाध्याये, इदं तु ते गुह्यतमं प्रवक्ष्यामीति प्रतिज्ञाय तादृशीं भक्तिमार्गमुक्त्वा, मामेवैष्यसि युक्त्वैवमात्मानं मत्परायण * इत्युपसंहृत्य तथापि गौणधर्मसांकर्यात्पुनर्भक्तेर्मुख्यत्वबोधनाय दशमे, भूय एवेत्यनेन परमं वचः प्रतिज्ञाय, भास्वतेत्यन्तेन भजनस्यैव फलपर्यवसायित्वमुक्त्वा विभूतिविश्वरूपाभ्यां प्रासङ्गिकं परिहृत्य द्वादशेऽक्षरोपासनादपि स्वोपासनाया उत्कर्षं भक्त्यनुकल्पान् भक्तोत्कर्षं च प्रतिपाद्य पुनरपि द्वाभ्यां प्रासङ्गिकं बोधयित्वा पञ्चदशे स्वस्य सर्ववेदवेद्यत्वं पुरुषोत्तमत्वं तच्छास्त्रस्य गुह्यतमत्वं तज्ज्ञाने कृतकृत्यत्वं चोक्त्वा तदग्रेऽधिकारिणं स्वरूपतो निर्णीय प्रासङ्गिकं पुनर्बोधयित्वाऽष्टादशे, समासेनैव कौन्तेयेति संदर्भेण ज्ञानादप्युत्कर्षं भक्तेर्बोधयित्वा पुनः सर्वगुह्यतमं प्रतिज्ञाय, मन्मना भवेत्यनेन पूर्वोक्तां भक्तिं द्वितीयेन प्रपत्तिं च तथात्वेनोक्त्वोपसंजहार। तेन गीतायामुत्कर्षो भक्तिमार्गस्यैव सिद्धः। एवमेव श्रीभागवतेऽपि, यस्यां वै श्रूयमाणायामिति वाक्ये श्रीभागवतस्य भक्त्युत्पादकत्वकथनात् व्यासेन समाधौ भक्तेरेवानर्थोपशामकत्वानुभवात्। एकादशे भगवदुद्धवसंवादे भक्तिसाधनान्युक्त्वा, प्रायेण भक्तियोगेन सत्सङ्गेन विनोद्धव * नोपायो विद्यते सम्यक् प्रायणं हि सतामहमिति चोक्त्वा, सुगोप्यमपि वक्ष्यामीति प्रतिज्ञाय द्वादशाध्याये सत्सङ्गस्य स्ववशापकत्वमुक्त्वा केवलेन हि भावेनेत्यादिना मुख्यभक्तेः, तस्मात्त्वमुद्धवेत्यादिना प्रपत्तेश्च कथनेन भक्तिस्त्वय्युपयुज्येत कीदृशी सद्भिरादृतेत्यस्योत्तरमाह। ततः श्रीमदुद्धवसंशयापगमे वेदस्वरूपं प्रतीयमानं वेदार्थं योगं चोक्त्वा प्रासङ्गिकं च परिहृत्य चतुर्दशे पुनर्भक्तिं प्रशस्य, तस्मादसदभिध्यानं यथा स्वप्नमनोरथम् * हित्वा मयि समाधत्स्व मनो मद्भावभावितमिति

घ ज्ञातं तदर्थं कथित इति नेदानीं मार्गान्तरेण मोक्षयतीत्ययमेवेदानीमुत्कृष्ट इत्यर्थः । एवं सुगमत्वं सर्वथा फलसाधकत्वं च विमृश्य ॥ २१६ ॥ २१७ ॥ २१८ ॥ २१९ ॥ २२० ॥ २२१ ॥

बुद्धिमानादरं तस्मिँश्छले साध्येऽपि दुःखतः ॥
त्यक्त्वा मार्गे ध्रुवफले भक्तिमार्गे समाविशेत् ॥२२२॥
विरुद्धकरणं नास्ति प्रक्रिया न विरुध्यते ॥
कलितैरेव बाधः स्यादवोचाम प्रमाणताम् ॥ २२३ ॥
सर्वथा चेद्धरिकृपा न भविष्यति यस्य हि ॥
तस्य सर्वमशक्यं स्यान्मार्गेऽस्मिन् सुतरामपि ॥
कृपायुक्तस्य तु यथा सिद्ध्येत् कारणमुच्यते ॥२२४॥
कृष्णसेवापरं वीक्ष्य दम्भादिरहितं नरम् ॥
श्रीभागवततत्त्वज्ञं भजेज्जिज्ञासुरादरात् ॥ २२५ ॥
तदभावे स्वयं वाऽपि मूर्त्तिं कृत्वा हरेः क्वचित् ॥
परिचर्यां सदा कुर्यात् तद्रूपं तत्र च स्थितम् ॥
साकारव्यापकत्वाच्च मन्त्रस्यापि विधानतः ॥ २२६ ॥
श्रीकृष्णं पूजयेद् भक्त्या यथालब्धोपचारकैः ॥
यथा सुन्दरतां याति वस्त्रैराभरणैरपि ॥ २२७ ॥
अलङ्कुर्वीत सप्रेम तथा स्थानपुरःसरम् ॥
भार्यादिरनुकूलश्चेत् कारयेद् भगवत्क्रियाम् ॥ २२८ ॥
उदासीने स्वयं कुर्यात् प्रतिकूले गृहं त्यजेत् ।
तत्त्यागे दूषणं नास्ति यतो विष्णुपराङ्मुखाः ॥२२९॥

एवं मार्गद्वयोत्तमत्वं प्रतिपाद्य साधिकानुपदिशति ॥ बुद्धिमानिति ॥ परमादरो बहुषु न संभवति । अत एवैकस्मिन् कर्त्तव्यः तत्र वेदमार्गापेक्षयाऽपि भक्तिमार्गस्योत्तमत्वप्रतिपादनात् सांप्रतमन्यस्याभावात् । आदरेण भक्तिमार्गे प्रविशेत् । मार्गे प्रवेशमात्रेणैव कृतार्थत्वात् ॥ २२२ ॥ नन्वेवं पाषण्डानामपि वचनानि भवन्तीत्याशङ्क्याह ॥ विरुद्धकरणं नास्तीति ॥ नात्र श्रुतिस्मृतिविरुद्धाचारो, नापि प्रमेयं वेदविरुद्धम् । अतो नात्र विरुद्धसंभावनाऽपि । ननु परःश्रया मुक्तिर्मायावादादिभिर्निराकृतेति कथं न प्रमेयविरोधस्तत्राह ॥ कल्पितैरेव बाधः स्यादिति ॥ ते हि स्वमार्गं फलत्वेन कल्पयन्ति । तदप्रामाणिकम् । आत्मशब्दस्य भगवद्वाचकत्वात् ॥ न तु जीवपरत्वं वेदान्तानाम् । नापि जीवस्य फलरूपत्वम् । अतः परमानन्दोऽधिको भवतीति न कदापि मुक्तिः स्वाधीना । अतएवात्र स्नेह एव तत्प्राप्तिहेतुः । अतो युक्त्याऽपि भगवन्मार्गस्य प्रामाण्यं साधितमित्यर्थः । परमत्र न सर्वेषां फलमुखाधिकारः, किन्तु येषु भगवत्कृपा । कृपापरिज्ञानं च मार्गरुच्या निर्धार्यते । तत्रादिमः साधनान्याह ॥ कृष्णसेवापरमिति ॥ यो हि गुरुः सेवामुपदेक्ष्यति स स्वयं चेत्तामुत्तमां जानीयात्तदा कथं न स्वयं कुर्यादिति सेवापर एव गुरुः । तत्रापि निमित्तानि वारयति ॥ दम्भादिरहितमिति ॥ सेवा च प्रमाणमूलैव पुरुषार्थपर्यवसायिनी । अन्यथा मनस्यन्यद्वाचान्यथा करणे न फलसिद्धिरित्यभिप्रायेणाह ॥ श्रीभागवततत्त्वज्ञमिति ॥ जिज्ञासुः, न तु कौतुकाद्याविष्टः । भजनं मन्त्रमात्रेण तदा तदुक्तप्रकारेण भगवद्सेवा कर्त्तव्या ॥ स च दुर्लभ इति ॥ तेनापि वक्तव्यं प्रकारमाह ॥ तदभाव इति ॥ क्वचिद्देशविशेषे सत्पारिपन्थिनामभावयुक्ते हरेर्मूर्तिं कृत्वा भजेत् ॥ अयमेवाऽस्य मार्गस्य प्रकार उत्तमः । यन्मूर्त्तौ

कृतं सर्वं भगवति कृतं भवति । तत्र मूर्तेर्भगवत्त्वं त्रेधा निरूपयति ॥ तद्रूपमिति ॥ वस्तुविचारेण सर्वस्य भगवद्रूपत्वाद्विशेषत्वमप्येनमुद्धरिष्यामीति तदा मृदादेः प्रादुर्भूतः भक्तिमार्गानुसारेणाह ॥ तत्र च स्थितमिति ॥ मूर्तौ स्थितम् । परं यत्र हस्तस्तत्र हस्तः । तत्तदवयवेषु तत्तदवयवा इति । तत्र हेतुः—व्यापकं साकारं ब्रह्मेति । अतः सर्वे कटकाद्युपचारा भगवदवयवेष्वेव साक्षात्कृता भवन्ति । उपासनामार्गानुसारेणापि मूर्त्तावेव भगवद्भजनं भवतीत्याह ॥ मन्त्रस्यापि विधानत इति ॥ न्यासादिपूर्वकं सर्वपूजा ॥ २२३ ॥ २२४ ॥ २२५ ॥ २२६ ॥ मूर्तौ विशेषमाह ॥ श्रीकृष्णमिति ॥ मूर्त्यन्तरे व्यन्तारितत्वम् । यथावद् मुख्यतया प्रासैर्द्रव्यैरुपचाराः कर्त्तव्याः । तत्रापि भक्तिमार्गानुसारेणोपचारा मुख्या इत्याह ॥ यथा सुन्दरतां यातीति । समेमेत्यनुद्वेगार्थम् । स्थानं मन्दिरम् । तदलङ्कारपूर्वकमेव भगवदलङ्करणं कर्त्तव्यमित्यर्थः ॥ एवं प्रवृत्तस्य भार्यादीनां विनियोगमाह ॥ भार्यादिरनुकूलश्चेदिति ॥ भार्यादिकं गृहम् ॥ विष्णुपराङ्मुखा भार्यादयः ॥ अन्यथा परित्यागे दोष एव । अनेन अवैष्णवैः सहास्मिन्मार्गे न स्थातव्यमित्युक्तं भवति ॥ २२७ ॥ २२८ ॥ २२९ ॥

उपदिशतीति । ननु भवत्विदानीमन्योत्कर्षो, न तु सर्वदा. तथा सति कदाचिद्यथोक्तरीतिकधर्मसंपत्ताविदानीमपि धेद्मार्गात् फलासिद्धिरिति शङ्कायां,गहना कर्मणो गतिरिति,शिलोञ्छवृत्त्या परितुष्टचित्त' इति क्लेशोऽधिकतरस्तेषामित्यादिवाक्यात्तस्य दुःखसाध्यत्वं तु सार्वदिकं,न त्वस्यंति नास्य कदाप्युत्कर्षहानिरित्याशयेनोपदिशतीत्यर्थः । तत्र पूर्वमधिकारोऽपेक्षित इति प्रथमतः सामान्यं तमाहु. ॥ बुद्धिमानिति ॥ बुद्धेरधिकारिविशेषणत्वं द्वितीयस्कन्धारम्भे, श्रोतव्यादीनित्यत्र साधितम । तादृशा यत्कर्त्तव्यं तदाहु ॥ परमादरेत्यादि ॥ मार्गे प्रवृत्त्यादि । अपि चेत्सुदुराचार इति वाक्यात्सथेत्यर्थः ॥ २२२ ॥ मूले, प्रक्रियापदेन पारिपाटी बोध्यते । तां विशदय-

न्ति ॥ नापि प्रमेयमित्यादि ॥ तथाच पाषण्डवैलक्षण्यस्यात्र स्फुट-
त्वाद् बुद्धिमतस्तज्ज्ञानं सुखेन भविष्यतीति नैष दोष इत्यर्थः । मूले,
कल्पितैरित्यादि ॥ वाक्यत्वेन कल्पितैर्वाक्याभासैरेवात्र बाधबुद्धिर्न तु
वास्तविको बाधः ॥ अहं सर्वस्य प्रभव इत्यादि ॥ प्रायेण भक्तियोगेन
इत्यादिप्रमाणानामुक्तत्वादित्यर्थः । ननु भक्तस्य प्रामाणिकत्वं, त-
थापि स्वाश्रयमुक्तिपक्षस्य कथं कल्पितत्वमत आहुः ॥ ते ही-
त्यादि ॥ आत्मशब्दस्येति ॥ आत्मलाभान्न परं विद्यते, तरति शो-
कमात्मविदित्यादिफलवाक्यगतस्य तस्येत्यर्थः । ननु मैत्रेयीब्राह्मणे,
आत्मशब्दः शारीरपर एव सिद्ध इति जीवपरत्वमेव वेदान्तानामिति
कथं तदेवमत आहुः ॥ न हीत्यादि ॥ यद्येवं स्याद् व्यासः शारीर-
जिज्ञासामेव प्रतिजानीयात् न ब्रह्मजिज्ञासाम् । अनुपपत्तेस्तु न शारीर
इति च न वदेत् । अतो मैत्रेयीब्राह्मणेऽप्युपसंहारप्राबल्यं निश्चित्या-
ऽऽत्मशब्दो ब्रह्मपर एवानुसंधेय इति भावः । तदिदं विस्तरतो ब्रह्मसूत्र-
भाष्यादवगन्तव्यम् । ननु विविक्तात्मज्ञानादपि यावद्दुःखनिवृत्तेरा-
त्मानं चेद्विजानीयादयमस्मीति पूरुषः । किमिच्छन् कस्य वा हेतोः
शरीरमनुसंज्वरेदिति श्रुतिसिद्धत्वात् कथं न स्वस्य फलत्वमत आ-
हुः ॥ नापीत्यादि ॥ जीवो ह्यंशः प्रदेशो वा, ब्रह्म तु ततोऽधिकम् ।
अधिकं तु भेदनिर्देशादित्यादिभ्यः । अतः प्राप्तिमूर्ध्यैवेति न यावद्-
दुःखनिवृत्तिमात्रस्य फलत्वम् । उक्तवाक्ये जीवलिङ्गस्याप्यदर्शनाच्च न
जीवस्य फलत्वमतस्तथेत्यर्थः । एवं स्वाश्रयमुक्तिपक्षदूषणेन तस्य
कल्पितत्वं प्रतिपाद्य पराश्रयमुक्तिपक्षे यत्साधनं पूर्वेण सिद्धं तदा-
हुः ॥ अत इत्यादि ॥ अस्य प्रमेयस्य पूर्वमुक्तत्वेऽपि पुनः स्मारणस्य
प्रयोजनमाहुः ॥ अतो गुरुरित्यादि ॥ ननु यद्येवं तर्हि प्रेक्षावतां सर्वे-
षामेव कुतो नात्र प्रवृत्तिरित्याकाङ्क्षायां दोषाभावस्याप्यधिकारिवि-
शेषणत्वं हृदि कृत्वा तत्साधनं सूचयन्त आहुः ॥ परमित्यादि ॥ आ-
नुमानिकमप्येकेषामिति सूत्रे विषयवाक्यविवेचने महत्पदेन भ-
गवत्कृपा प्रतिपादिता । सा च भगवदधीनाऽतस्तथेति नायं दोष
इत्यर्थः । ननु तस्या भगवत्कार्ये कथमधिकारनिश्चय इत्याकाङ्क्षाया-
माहुः ॥ कृपापरीत्यादि ॥ अत्रोदाहरणमाहुः ॥ निर्लीयत इति ॥ अ-
स्माभि रिति शेषः । अन्येषां तु मार्गोपविपर्यासं वेदवचनाचारैः ।
अथ भागवतं सूत्रेत्यत्र तथासिद्धेः ॥ २२३ ॥ २२४ ॥

कृतं सर्वं भगवति कृतं भवति । तत्र मूर्तेर्भगवत्त्वं त्रेधा निरूपयति ॥ मदूरूपमिति ॥ वस्तुविचारेण सर्वस्य भगवद्रूपत्वाद्विशेषस्त्वयमु-पनमुद्धारिष्यामीति तदा मृदादेः प्रादुर्भूतः भक्तिमार्गानुसारेणाह ॥ तत्र च स्थितमिति ॥ मूर्तौ स्थितम् । परं यत्र हस्तस्तत्र हस्तः । तत्तदवयवेषु तत्तदवयवा इति । तत्र हेतुः—व्यापकं साकारं प्रकटं-ति । अतः सर्वे कटकाद्युपचारा भगवदवयवेष्वेव साक्षात्कृता भ-वन्ति । उपासनामार्गानुसारेणापि मूर्तावेव भगवद्भजनं भवती-त्याह ॥ मन्त्रस्यापि विधानत इति ॥ न्यासादिपूर्वकं सर्वपूजा ॥ २२३ ॥ २२४ ॥ २२५ ॥ २२६ ॥ मूर्तौ विशेषमाह ॥ श्रीकृष्णमिति ॥ मूर्त्यन्तरे व्यन्तरितत्वम् । यथावद् मुख्यतया प्राप्तैर्द्रव्यैरुपचाराः कर्तव्याः । तत्रापि भक्तिमार्गानुसारेणोपचारा मुख्या इत्याह ॥ यथा सुन्दरतां यातीति । सम्भ्रमेत्यनुद्वेगार्थम् । स्थानं मन्दिरम् । तदलङ्कारपूर्वकमेव भगवदलङ्करणं कर्तव्यमित्यर्थः ॥ एवं प्रवृत्तस्य भार्यादीनां विनियोगमाह ॥ भार्यादिरनुकूलश्चेदिति ॥ भार्या-दिकं गृहम् ॥ विष्णुपराङ्मुखा भार्यादयः ॥ अन्यथा परित्यागे दोष एव । अनेन अवैष्णवैः सहास्मिन्मार्गे न स्थातव्यमित्युक्तं भ-वति ॥ २२७ ॥ २२८ ॥ २२९ ॥

उपदिशतीति । ननु भवत्विदानीमन्योत्कर्षो, न तु सर्वदा, त-था सति कदाचिद्यथोक्तरीतिकधर्मसंपत्ताविदानीमपि वेदमार्गात् फलसिद्धिरिति शङ्कायां, गहना कर्मणो गतिरिति, शिलोञ्छवृत्त्या परि-तुष्टचित्त' इति कुशोऽधिकतरस्तेषामित्यादिवाक्यात्तस्य दुःखसा-ध्यत्वं तु सार्वदिकं, न त्वस्येति नास्य कदाप्युत्कर्षहानिरित्याशयेनो-पदिशतीत्यर्थः । तत्र पूर्वमधिकारोऽपेक्षित इति प्रथमतः सामान्यं त-माहुः ॥ बुद्धिमानिति ॥ बुद्धेरधिकारिविशेषणत्वं द्वितीयस्कन्धारम्भे, श्रोतव्यादीनित्यत्र साधितम् । तादृशा यत्कर्तव्यं तदाहुः ॥ परमादरे-त्यादि ॥ मार्गे प्रवेशात्यादि । अपि चेत्सुदुराचार इति वाक्यात्तथेत्य-र्थः ॥ २२२ ॥ मूले, प्रक्रियापदेन पारिपाटी बोध्यते । तां विशदय-

न्ति ॥ नापि प्रमेयमित्यादि ॥ तथाच पाषण्डवैलक्षण्यस्यात्र स्फुटत्वात् बुद्धिमतस्तज्ज्ञाने सुखेन भविष्यतीति नैष दोष इत्यर्थः । मूले, कल्पितैरित्यादि ॥ वाक्यत्वेन कल्पितैर्वाक्याभासैर्वेदबाधश्रुतिर्न तु वास्तविको बाधः ॥ अहं सर्वस्य प्रभव इत्यादि ॥ प्रायेण भक्तियोगेन इत्यादिप्रमाणानामुक्तत्वादित्यर्थः । ननु भक्तत्वस्य प्रामाणिकत्वं, तथापि स्वाश्रयमुक्तिपक्षस्य कथं कल्पितत्वमत आहुः ॥ ते हीत्यादि ॥ आत्मशब्दश्रुत्योरिति ॥ आत्मलाभान्न परं विद्यते, तरति शोकमात्मविदित्यादिफलवाक्यगतस्य तस्येत्यर्थः । ननु मैत्रेयीब्राह्मणे, आत्मशब्दः शारीरपर एव सिद्ध इति जीवपरत्वमेव वेदान्तानामिति कथं तथेत्यत आहुः ॥ न त्वित्यादि ॥ यद्येवं स्याद् व्यासः शारीरजिज्ञासामेव प्रतिजानीयात्र ब्रह्मजिज्ञासाम् । अनुपपत्तेस्तु न शारीर इति च न वदेत् । अतो मैत्रेयीब्राह्मणेऽप्युपसंहारस्वारस्यं निश्चित्याऽऽत्मशब्दो ब्रह्मपर एवानुसन्धेय इति भाव । सर्वमिदं विस्तरतो ब्रह्मसूत्रभाष्यादवगन्तव्यम् । ननु विविक्तात्मज्ञानादपि यावद्दुःखनिवृत्तेरात्मानं चेद्विजानीयादयमस्मीति पूरुषः । किमिच्छन् कस्य वा हेतोः शारीरमनुसंज्वरेदिति श्रुतिसिद्धत्वात् कथं न स्वस्य फलत्वमत आहुः ॥ नापीत्यादि ॥ जीवो ह्यंशः प्रदेशो वा । ब्रह्म तु ततोऽधिकम् । अधिकं तु भेदनिर्देशादित्यादिभ्यः । अतः प्राप्तिर्मुख्यैवेति न यावद्दुःखनिवृत्तिमात्रस्य फलत्वम् । उक्तवाक्ये जीवलिङ्गस्यादर्शनाच्च न जीवस्य फलत्वमनुक्तमेवेत्यर्थः । एवं स्वाश्रयमुक्तिपक्षदूषणेन तस्य कल्पितत्वं प्रतिपाद्य पराश्रयमुक्तिपक्षे यत्साधनं पूर्वत्र सिद्धं तदाहुः ॥ अत इत्यादि ॥ अस्य प्रमेयस्य पूर्वमुक्तत्वेऽपि पुनः स्मारणस्य प्रयोजनमाहुः ॥ अतो मुख्येत्यादि ॥ ननु यद्येवं तर्हि प्रेक्षावतां सर्वेषामेव कुतो नात्र प्रवृत्तिरित्याकाङ्क्षायां बोधस्याभावस्याप्यधिकारिविशेषपरत्वं हृदि कृत्वा तत्साधनं सूचयन्त आहुः ॥ परमित्यादि ॥ आनुमानिकमप्येकेषामिति सूत्रे विषयवाक्यविवेचने अव्यक्तपदेन भगवत्कृपा प्रतिपादिता । सा च भगवद्धर्मानाश्रयत्वेति नायं दोष इत्यर्थः । ननु तस्या अव्यक्तत्वे कथमधिकारनिश्चय इत्याकाङ्क्षायामाहुः ॥ कृपापरीत्यादि ॥ अत्रोदाहरणमाहुः ॥ निश्चिनुत इति ॥ अस्माभिरिति शेषः । अन्येषां तु मार्गद्वयपरिज्ञानं वेदवचनाचारैः । अथ भागवतं ब्रूतेत्यत्र तथा सिद्धेः ॥ २२३ ॥ २२४ ॥

तत्रेत्यादि ॥ ननु यद्येवं सदा कृपयैव फलसिद्धेः साधनवैयर्थ्य-मित्याकाङ्क्षायां साधनशास्त्रार्थपरया तद्द्वारैव प्राप्य इति निश्चित्य कृपाया अनुग्रहात्मधर्मान्तररूपत्वात्तस्य भक्तिकारणताया भक्तिहेतु-निर्णये विवेचितत्वादनुग्रहेण भक्तेः सिद्धावपि तदवस्थारूपस्य प्रेम्णः साधनसापेक्षत्वात् स यथा सिद्ध्येत् तथा साधनान्याहेत्य-र्थः। तत्र, भक्तिज्ञापितसद्धर्मो गुरुं मुनिमुपाश्रयेदिति भगवद्वाक्येषु, निरालम्बो यथा लोके स्यानस्रष्टो निगद्यते * हरेः कृपाविशिष्टोऽपि गुरुहीनस्तथैव च * यथा भक्तिः स्वतन्त्रोक्ता गुरुसेवापि तादृशी * जिज्ञासार्थमाचार्य तथापि विनिगद्यत इत्येकादशी सुबोधिन्यां प्र-बुद्धवाक्येषु सिद्धेः। प्राथमिकं तदेवेति गुरुलक्षणपूर्वकं तां वदन्त श्च हुः ॥ कृष्णेत्यादि ॥ अत्र प्रथमतृतीये गुरुविशेषणे, शाब्दे परे च निष्णातमित्यनेन सिद्धतः। द्वितीयं चोपशमाश्रयपदेन। यद्यपि संदेहवारणाय वैधदीक्षावद् हृदयप्रवेशाय चोभयनिष्णातत्वं तस्य-ध्यावश्यतं, तथापि हृदि भगवत्प्रवेश एव साधनेषु निष्ठा वर्त्तत इति भगवत्सेवापरत्वं तस्यैव लक्षणम्। तदेवाभिप्रेत्याहुः॥ यो हि गुर-रित्यादि ॥ द्वितीयस्य तात्पर्यमाहु. ॥ तथापीत्यादि ॥ मूले, दम्भा-दीत्यादिपदेन कामलोभपूजा. संगृह्यन्ते ॥ सेवा चेत्यादि ॥ तथाच श्रीभागवतस्य सर्वप्रमाणसारकर्पतायाः, सर्ववेदेतिहासानां सारं सारं समुद्धृतमितिद्वादशीयवाक्येसिद्धत्वाच्छाब्दनिष्णातत्वं श्रीभागवत-तत्त्वज्ञत्वरूपमेव बोध्यम् ॥ चेत्यनेन मार्गान्तरादत्र वैलक्षण्यं ज्ञा-पितम्। ईदृशे दैन्ना(?)ङ्गनयोः विना च सम्यक्त्वं परीक्षणे यत्यते। तथाच तन्त्रे, गुरु. परीक्षयेच्छिष्यमिति वाक्याच्छिष्यो यथा परीक्ष्य-ते तथा गुरु। नोचेत्तादृशस्य लोकानुगतपशुरूपत्वात्तादृशोऽनु-सरणेऽन्धानुगान्धवदुभावपि पतेताम्। एतदर्थमेव अलभेदमन्य-करणं श्रेयम्। अयमत्र्यर्थः, शाब्दे परे चेत्यादिविशेषणानां ज्ञाताना-मेव प्रपत्त्युपयोजकत्वात् सिद्धाति। एवं गुरुस्वरूपं निश्चित्य शि-ष्यमाहुः॥ जिज्ञासुरित्यादि ॥ यद्यप्यत्र जिज्ञासायां कर्म न निर्दिष्टं, तथाप्युत्तमं श्रेय एव समाधनं प्रकरणाद् बोध्यम्। तच्च भगवान्-तत्सायुज्यं तत्सायुज्यं च। एतज्जिज्ञासा च, सात्त्विका भगवद्भक्ता इत्यनेनात्मनज्ञायामुत्तमस्यैव संभवति तत्राप्युत्कटा गुरुभक्त्यादर-जनिका सुतरां तादृशस्यैवेति स एवाधिकारी। तेन प्रश्नसंबन्धो-

उत्तमत्वं तथाऽर्पणीभावः। तेनापत्ती यह्लादयोऽपि संगृहीता ज्ञेयाः ॥ हरेर्मूर्त्तिं कृत्वा भजेदिति॥ भगवत्स्वरूपं स्वामित्वेन भावयित्वा आत्मानं दासं भावयन् दासकार्यं कुर्यादित्यर्थः। ननु पूर्वमस्य मार्गस्य भगवद्युक्तत्वप्रतिपादनादस्मिन् भगवद्धर्मत्वमुक्तं भवति। तल्लक्षणं चैकादशे योगेश्वरवाक्ये, ये वै भगवता प्रोक्ता उपाया ह्यात्मलब्धये * अञ्जः पुंसामविदुषां विद्धि भागवतान् हि तानित्युक्तम्। तत्र ये धर्मा वै निश्चयेन भगवत्फला एव, कायवाङ्मनोभिर्व्यस्तैः समस्तैर्भगवद्विषया एव, भगवतैव च प्रोक्ताः, यथा, मन्मना भवेत्यादौ ते भागवता इति तत्र स्थितम्। एवं सति योगेश्वरवाक्येषु आत्यन्तिकक्षेमप्रश्ने, मन्येऽकुतश्चिदित्यनेन प्रपत्तिमार्गं तथात्वेनोक्त्वा धर्मान् भागवतान् ब्रूतेति प्रश्ने, ये वै इति लक्षणमुखेन तानेवोक्त्वा द्वितीये तदुत्कर्षं चोक्त्वा तदग्रे त्रिभिः प्रथमाधिकारिकार्याण्युक्त्वा पञ्चभिस्तदनुकल्परूपौ चाह। तत स्थूलबुद्धीनामपि भगवत्प्राप्त्यै तानेवादितः पुनराह। ऐहिकामुष्मिकफलभोगविरागपूर्वकं गुरुशरणगमनं, ततस्तत्सेवनं सर्वभावेन। तत कर्मज्ञानमार्गप्रवेशस्ततः स्तत्तभिर्भक्तिमार्गस्ततस्तस्य फलपर्यवसायित्वमिति क्रमेण। ननु भगवानप्येकादशाध्याये, श्रद्धालुर्मे कथाः शृण्वन्नित्यादिना, भगवदाश्रितस्य कथाश्रवणगानस्मरणजन्माऽभिनयभगवदर्थधर्मकामार्थचरणानि भक्तिलाभकारणत्वेनाहेति तं क्रमं विहाय किमिति मूर्त्तिभजनमेव प्रथमत उच्यत इत्याकाङ्क्षायामाहुः ॥ अयमित्यादि ॥ तथाच साक्षादुपयोगादेतस्या एव मुख्यतयोपदेश इति भावः ॥ सर्वमिति ॥ एवञ्च समानन्यायेन मूर्त्तावपराधोऽपि भगवदपराध इति ज्ञापितम्। तत्रेत्यादि ॥ ननु तथापि सूर्योऽग्निर्ब्राह्मणा गाव इति भगवताऽन्येषामपि पूजास्थानानां कथनाच्छालग्रामे भगवत्सान्निध्यस्य शास्त्रसिद्धत्वाच्च तानि विहाय किमिति मूर्त्तावेव भजनमुपदिश्यत इत्याकाङ्क्षायां सात्त्विकानां ज्ञानभक्त्युपासनाप्रधानभेदेन त्रैविध्यात्तत्तद्रीत्या कथनं तस्य तस्य योग्यो भवतीति तत्तदर्थं त्रेधा निरूपयतीत्यर्थं। तत्र पूर्वं ज्ञानप्रधानं प्रति भगवत्त्वे हेतुमाहुः ॥ यस्त्वित्यादि ॥ यद्येवं तर्हि मूर्त्तौ को विशेष इत्यत आहु ॥ विशेषस्त्वित्यादि ॥ तथाच यथा प्रह्लादार्थं स्तम्भादिभ्य प्रादुर्भावस्तथाऽप्येतस्यैवो- प्रादुर्भावो, न तु साधारणतयेति सूर्यादिभ्य· शालग्रामाद्या-

अत एव परिचर्या चोभयत्रेति योगेश्वरवाक्यम् । परिचर्या स्तुतिप्र- ह्वेति, मदर्चास्थापने श्रद्धेति, आदरः परिचर्यायामित्यादिभगवद्वा- क्यानि च। एवं मूर्तौ परिचरणमेव मुख्यमिति स्थापितम्॥२२५॥२२६॥

मूर्तावित्यादि॥ एवं सर्वासु मूर्तिषु तुल्यतया भजनप्राप्तौ कस्यां कार्यमित्यपेक्षायां कस्याश्चिन्मूर्तौ विशेषमाहेत्यर्थः । मूर्तौ भगव- त्स्थितिर्यद्येऽपरसीयावेशरूपा भवति। एवं सति मूर्त्यन्तरे च आवेशः सोऽवतारूपस्य । तथ, एतन्नानावताराणां निधानं बीजमव्ययमिति भगवद्वपुरुषांशभूतामिति वस्तरितत्वं बोध्यम् । अत्र च श्रीकृष्ण- पदेन युगलसेवापि सूचिता ज्ञेया । समानन्यायाच तत्स्वरूपे तथा- स्थितिरिति च । भवत्यो विशेषो मत्कृतमूर्तिपूजनयादादनुसंधेयः । एवं मूर्तिं निश्चित्य, परिनिष्ठा तु पूजायामिति वाक्यात् पूजनमा- वश्यकमिति तत्प्रकारमाहुः ॥ यथावदिति॥एतस्यैव विवरणं- मुख्य- तयेति ॥ राजोपचारैरित्यर्थः । लब्धोपचारकैरित्यस्य विवरणं- प्राप्तैर्द्रव्यैरुपचाराः कर्त्तव्या इति ॥ पूजनं च समीपे स्थित्वा यथा- योग्यं सेवनम् । परिचर्या तु विप्रकर्षे स्थित्वेति विशेषः । उचितः सत्कार उपचारः । उपचाराश्च शक्त्यनुसारेण सहस्रशतषोडशप- ञ्चान्यतमाः । तत्रोद्वासावाहनेऽत्र न स्त एव । मूर्तौ स्थितत्वपा- दितत्वात् । पाद्यं तु स्नानसमय एव साम्प्रदायिकैः क्रियते । दन्त- धावनं तु बालभावादेव नेह । अभ्यङ्गोन्मर्दनादर्शाभिषेचनानि तु यथासम्भवम् उत्सवादौ प्रत्यहं विच्छिद्य च क्रियन्ते एव । एवम- न्येऽपि सम्प्रदायाद् बोध्याः । आश्रयेतत्यनुवृत्तौ, देवासुरमनुष्येषु भद्रक्ताचरितानि चेति वाक्यात् ॥ अनुद्वेगार्थमिति ॥ उद्वेगो द्वेधा चित्तस्य चाञ्चल्येन खेदेन च । खेदोऽपि देहरोगादिकृतो भगवति दुरुपचारकृतश्च । तत्प्रेम्णा क्रियमाणे शीतोष्णवर्षादिषु जलवसना- दीनां यथोचितसमर्पणमेव भवति । चाञ्चल्यादिकं च निवर्तत इति तदर्थं, न तु पुष्टिरूपताज्ञापनार्थं, साधनावस्थात इत्यर्थः ॥ स्थाने मन्दिरमित्यादि ॥ संमार्जनोपलेपाभ्यां सेकमण्डलवर्तनैः * गृहशु- श्रूषणं मह्यं दासवद्यदमाययेति भगवद्वाक्यादित्यर्थः । उपलक्षणमे- तत् । तेन वितानशयनासनाद्यलङ्करणमपि तत्तदुपयोगावसरात् पू- र्वं बोध्यम् ॥ एवं प्रवृत्तस्येत्यादि ॥ इदं च सहायसापेक्षमिति ते या- दृशा अपेक्षितास्तान् वक्तुं भार्यादिविनियोगमाहेत्यर्थः । एतेन

दारादीनां निवेदनोत्तरं विनियोगः प्रदर्शितः ॥ निवेदनाभावेऽपि प्रातिकूल्यस्य सम्भवादिति । यथा मदर्थं धर्मकामार्थानाचरन्निति, मदर्थेऽर्थपरित्यागो भोगस्य च सुखस्य चेति वाक्यं च समर्थितं ज्ञेयम् । ते चेदनुकूलास्तदा भगवत्येव विनियोज्या, न स्वार्थमिति । औदासीन्ये तु निर्बन्धेन तेषां क्लेशसम्भवात् क्लिष्टस्य च भगवताऽनङ्गीकारात् स्वयमेव कुर्यात् । प्रातिकूल्ये तु त एव त्याज्या न तु स्वयं गच्छेदिति बोधयितुं गृहपदार्थमाहुः ॥ भार्यादिकमिति ॥ तथाच, निर्विण्णो नातिसक्तो भक्तियोगोऽस्य सिद्धिद इति मध्यमाऽधिकारात् तथेति भावः । ननु, वृद्धौ च माता पितरौ साध्वी भार्या शिशुः सुतः । अप्यकार्यशतं कृत्वा भर्तव्या मनुरब्रवीदिति स्मृतेस्तत्त्यागोऽनुचितः मध्यमाधिकारे दारस्यापि सम्भावनादिति शङ्कायां, तत्त्यागे दूषणं नास्तीत्यर्थं विवृण्वन्त आहुः ॥ विष्णुपराङ्मुखा इत्यादि ॥ ततो दुःसङ्गमुत्सृज्येत्यादौ दुःसङ्गत्यागस्याङ्गत्वेनोपदेशात् स्मृतेरबुद्धिपरत्वात्साक्षाद्विपक्षयोगेनाबहिर्मुखत्यागपरत्वाद्वा तथेतिभावः । एतदेवाहुः अन्यथेत्यादिना ॥ एवं कृष्णात्मनाथेषु मनुष्येषु च सौहृदमिति वाक्यात्तथात्वेऽपत्यानां तथेति भावः । एवं कृष्णवतां सदा भजनप्रकार उक्तः ॥ २२७ ॥ २२८ ॥ १२९ ॥

सर्वथा वृत्तिहीनश्चेदेकं यामं हरौ नयेत् ॥
पठेच्च नियमं कृत्वा श्रीभागवतमादरात् ॥
सर्वं सहेत परुषं सर्वेषां कृष्णभावनात् ॥ २३० ॥

जीवने प्रकारमाहुः ॥ सर्वथा वृत्तिहीनश्चेदिति ॥ याममात्रं भगवत्सेवां विधाय पश्चादनिषिद्धेनोपायेन जीवनं संपादयेत् । पारम्पर्यजीवनमपि निषिद्धं चेत् । तदा त्यक्तव्यम् । अचौराणामऽपापानामिति वचनात् । जीविकार्थं चित्तं व्यापृतं पुनर्भगवति योजनार्थमुपायमाहुः ॥ पठेच्च नियमं कृत्वेति ॥ अनेनाल्पबहिर्मुखतायामपि श्रीभागवतमनुसन्धेयमित्युपायः कथितः । एतद्भजनमान्तरं मुख्यम् । तत्र यथा बहिर्मुखजने प्रतिकूलपरित्यागस्तथान्तर-

भजनेऽपि प्रतिकूलपरित्यागमाह ॥ सर्वं सहेतेति ॥ यथा गृहमव्याकुलं बहिःपूजायां कर्तव्यं, तथैव हृदयमव्याकुलं विधेयम् । तथारिभिर्न व्यथते शिलीमुखैरिति वाक्याद् दुष्टानां वचनेन क्षोभो भवति । तत्र तानि वचनानि हितत्वेन ग्राह्याणि । अत्यन्तं विरुद्धानि चेत् प्रकारभेदेन । तत्रोपपत्तिमाह ॥ कृष्णभावनादिति ॥ कृष्ण एवास्मानुपदिशति, बहिर्मुखतया न स्थातव्यमित्यर्थः ॥ २३० ॥

अन्येषां सर्वदा निर्वाहः कथं स्यादित्याकाङ्क्षायामाहुः ॥ जीवन इत्यादि ॥ याममात्रेत्यादि ॥ तथाच योऽर्जक स एवं कुर्यात् । शेषास्तु पूर्ववदेव कुर्युः । अयमर्थः । देवोऽसुरो मनुष्यो वेति, सर्वेऽधिकारिणो ह्यत्र विष्णुभक्तौ यथा नृपेति वाक्याभ्यां, किरातहूणेति वाक्याच्च भगवद्भजनादौ सर्वेषामधिकारेऽप्याहारशुद्धौ सत्त्वशुद्धिरिति श्रुत्याहारशुद्धये स्ववृत्त्यान्नसंपादनस्यावश्यकतया वृत्तिरपि संकोच्या । प्रतिग्रहं मन्यमानस्तपस्तेजोयशोनुदम् * अन्याभ्यां जीवेतेत्यादिषु तथा दर्शनात् । सप्तमस्कन्धे सर्वेषां वृत्तिं वदता नारदेन, वृत्तिः सङ्करजातीनां तत्तत्कुलकृता भवेत् * अचौराणामपापानामन्त्यजान्तेऽवसायिनामित्युक्त्वाग्रे नैर्गुण्यकथनादितिभावः । एवं यथा तथा वृत्तिर्वाव्युत्पादितमस्माभिः । नन्वेवं जीवनोपाये क्रियमाणे पुनर्बाहिर्मुख्यापत्तिरिति किं कार्यमित्यत आहुः ॥ जीविकेत्यादि ॥ व्यापृतामिति ॥ तस्येति शेषः । श्रीभागवतपाठस्यैव सहकारी यमुनाष्टकादिपाठो ज्ञेयः । एवम् अबहिर्मुखतया भगवद्भजनरूपं साधनमुपदिश्य तस्याधिदैविकत्वाय साधनान्तराण्युपदेष्टुं भजने तारतम्यमुपदिशन्त आहुः ॥ एतद्भजनमित्यादि ॥ आन्तरं मुख्यमिति ॥ मनोमात्रस्य सूक्ष्मदेहस्य नान्तरीयकत्वात्तथेत्यर्थः । सर्वसहने युक्तिमाहुः ॥ यथा दृढमित्यादि ॥ कृष्णभावनादीति ल्यब्लोपे पञ्चमीति । भावनाप्रकारमाहुः । कृष्ण एवेत्यादि ॥ २३० ॥

एतस्यापि सिद्ध्यर्थं दयया सर्वभूतेषु संतुष्ट्या येन केनचित् * सर्वेन्द्रियोपशान्त्या च तुष्यत्याशु जनार्दन इति चतुर्थस्कन्धादाशुभगवत्तोषक उपायो वक्तव्यः । अन्यथा भगवत्यप्रसन्ने किमपि न

सिद्ध्येत् । अतो वदन्ति ।

वैराग्यं परितोषं च सर्वथा न परित्यजेत् ॥
एतद्देहावसाने तु कृतार्थः स्यान्न संशयः ॥ २३१ ॥
इति निश्चित्य मनसा कृष्णं परिचरेत् सदा ॥
सर्वापेक्षां परित्यज्य दृढं कृत्वा मनः स्थिरम् ॥२३२॥
दृढविश्वासतो युक्त्या यथा निर्व्यसथाऽऽचरेत् ॥
वृथालापक्रियाध्यानं सर्वथैव परित्यजेत् ॥ २३३ ॥
यद्यदिष्टतमं लोके यच्चातिप्रियमात्मनः ॥
येन स्यान्निर्वृतिश्चित्ते तत् कृष्णे साधयेद् ध्रुवम्॥२३४॥
स्वयं परिचरेद्भक्त्या वस्त्रप्रक्षालनादिभिः ॥
एककालं द्विकालं वा त्रिकालं वापि पूजयेत् ॥२३५॥
स्वधर्माचरणं शक्त्या विधर्माच्च निवर्त्तनम् ॥
इन्द्रियाश्वविनिग्राहः सर्वथा न त्यजेत् त्रयम् ॥२३६॥
एतद्विरोधि यत् किञ्चित्तत्तु शीघ्रं परित्यजेत् ॥
धर्मादीनां तथा चास्य तारतम्यं विचारयन् ॥२३७॥
यथा यथा हरिः कृष्णो मनस्याविशते निजे ॥
तथा तथा साधनेषु परिनिष्ठा विवर्द्धते ॥ २३८ ॥
कृष्णे सर्वात्मके नित्यं सर्वथा दीनभावना ॥
अहङ्कारं न कुर्वीत मानापेक्षां विवर्जयेत् ॥ २३९ ॥
सर्वथा तद्गुणालापं नामोच्चारणमेव वा ॥

सभायामपि कुर्वीत निर्भयो निःस्पृहस्ततः ॥ २४० ॥
साधनं परमेनद्धि श्रीभागवतमादरात् ॥
पठनीयं प्रयत्नेन निर्हेतुकमदम्भतः ॥ २४१ ॥

उत्तमगुरुद्वयशिक्षानुसन्धेयेत्याह ॥ वैराग्यमिति ॥ एवं सहने हेतुभूतं विचारमाह ॥ एतदिति ॥ भृतकः समयमिव देहावसानमेव विचिन्तयेत् । एकापि परिचर्या सकृत्कृता परमपुरुषार्थदेति । परं म्रियमाणदेहस्य निष्कृत्यर्थं सदा परिचरेत् । ननु क देशे कथं वा परिचरेदित्याकाङ्क्षायामाह ॥ सर्वापेक्षामिति ॥ सापेक्षमसमर्थं भवतीति मूलं भगवदर्थे स्थापयित्वा साधनाभावाद्वैकल्यं जातमपि निवार्य चित्तं भगवत्येव स्थिरीकृत्य यथा पुत्रः पितरि मातरि वा विश्वासं करोति तथा दृढविश्वासो लौकिकयुक्त्या यथैव पूजा सिद्ध्यति तथैव कर्तव्यमिति लौकिकयुक्तिरेवोपदिष्टा । तद्युक्तिसिद्ध्यर्थं वृथालापादिकं मार्गं निषेधति ॥ वृथालापेति ॥ कायवाङ्मनसां स्वभावतः प्रवृत्तां क्रियां त्यजेत् । भगवत्येवाप्यसमपि क्लिष्टं न समर्प्पयेत् । तत्क्लिष्टं त्रिविधं–लोकक्लिष्टम्, आत्मक्लिष्टं, चित्तक्लिष्टं चेति । अतोऽक्लिष्टं निरूप्यते । लोके यद्यदिष्टतमम् आम्रद्राक्षादि आत्मनः अत्यन्तं प्रियं दुग्धादि सन्मार्गोपार्जितं नान्येषां भागरूपं चिरकालमनोरथचिन्तितम् । अन्तःकरणप्रियम् । तेनैव चित्तनिर्वृतिः । इतरनिषेधार्थमनदुक्तम् ॥ २३१ ॥ २३२ ॥ २३३ ॥ २३४ ॥ सेवा मुख्या, न तु पूजेति मन्त्रमात्रपूजापरो न भवेदित्याशयेनाह ॥ स्वयं परिचरेदिति ॥ धर्मार्थिनां व्यावर्तयति ॥ भक्त्येति ॥ वस्त्रप्रक्षालनमतिबहिरङ्गमिति तद्ग्रहणम् । प्रधानाप्रधानाङ्गान्यावर्तन्त इति प्रधानाद्यपिमाह ॥ एककालमिति ॥ अनेन बहुकालमपि पूजनं निरूपितम् ॥ २३५ ॥ अत्र नित्यकर्मादीनामङ्गत्वमाह ॥

स्वधर्माचरणमिति ॥ स्वधर्मा अग्निहोत्रादयः । विधर्मा निषिद्धाः । नात्र शक्त्येति सर्वथा निषिद्धं न कर्तव्यम् । इन्द्रियाण्येवाश्वाः । एतन्निग्रह इष्टदेशप्रापकः । एतत्त्रयं क्रीडार्थमपि न त्यजेत् । सङ्गत्रयाणां बाधकः । तत् परित्यजेदित्याह ॥ एतद्विरोधीति ॥ सामान्यवचनं धर्मादीनामुपलक्षणम् । परार्थमपीन्द्रियनिग्रहाभावसंभवात् । पूजाविरोधि धर्मादिकं तु त्यक्तव्यमेवेत्यत्र विचारमाह ॥ धर्मादीनामिति ॥ भगवद्भजनस्य मोक्षः फलं परोपकारादि सर्वधर्माणामपि क्षयिष्ण्वेव फलम् । अत उभयोरन्तरं ज्ञात्वा परोपकारादिधर्मा न कर्तव्या यदि पूजाविरोधिनो भवन्ति ॥ २३६ ॥ २३७ ॥ अत्र मार्गे पूजासाधनानामनुवृत्तौ कारणमाह ॥ यथायथेति ॥ श्रवणकीर्तनादिना हरिश्चेद् हृदये निविशते तदा पूजा सर्वदा निर्वहतीत्यर्थः । अत्र बाधकानां विशेषमाह ॥ कृष्णे सर्वात्मके इति ॥ मनसि स्वस्य दीनता भावनीया । सर्वाधिष्ठानेषु सर्वलोकेषु च यत्र यत्र भगवद्बुद्धिर्भवति बुद्धिश्च कर्तव्या । अन्यकर्तृकापमानेऽपि नाहङ्कारं कुर्यात् । भगवतः सकाशान्मानापेक्षां च वर्जयेत् ॥२३८॥ २३९ ॥ एतत्सिद्ध्यर्थमुपायमाह ॥ सर्वथा तद्गुणालापमिति ॥ सर्वथा सर्वत्र भगवद्गुणकथनने पूर्वोक्तं सिद्ध्यति । दैत्यानां सन्निधानेऽपि निर्भयः । फलाभावाय निःस्पृहः ॥ तत इति ॥ केवलं

सिद्ध्यति ॥ २४० ॥ २४१ ॥

उत्तमेत्यादि ॥ उत्तमा गुरुद्वयस्य कपोतपिङ्गलारूपस्य या शिक्षा सेत्यर्थः ॥ वैराग्यमित्यादि ॥ यथा कपोतः कुटुम्बग्रासरज्जुबद्धस्तद्वशगोऽभूत्तथास्याप्यासक्तो भविष्यतीति तदभावाय वैराग्यमावश्यकम् । यथा पिङ्गला सर्वाशां परित्यज्य भगवच्चिन्ता मनीषां त्यक्त्वा यथालाभेन जीवती संतुतोष तथा करणे चिन्ताव्याकुल-

तायां स्वस्याप्यबहिर्मुखयमिति तदप्यावश्यकम् । एतद्द्वयेन पूर्वोक्तं सर्वं सिद्ध्यतीत्यत उक्तं मूले, सर्वथेति ॥ यद्यपि मधुकारमहासयौ लोकेऽस्मिन्नो गुरूत्तमौ * वैराग्यं परितोषं च प्राप्ता यच्छिक्षया वयमिति सप्तमे प्राञ्जलं, तथापि तत्राद्ये धनादेव वैराग्यमुपपादितम् । द्वितीये च परितोषमात्रं, न तु भगवच्चित्ततापीत्यतो मयेदमाहृतम् । अत उभयमध्ये यदुचितं तद्वा, यथाधिकारमुभयं वा ग्राह्यम् ॥ एवं सहने इत्यादि ॥ एवं सहने, दुःखभवनादिदमशक्यं मत्वा तन्निर्वाहाय साधनीभूतं विचारमाहेत्यर्थः । मूले, स्यान्न संशय इत्यत्रानुस्वारस्य परसवर्णः । तथाच भृतको यथा कार्यसमाप्तौ फलाद्वयम्भावं निश्चित्य कार्यसमाप्तिं तदर्थं चिन्तयति तथाऽयमपि, यस्य स्यादद्वा न विचिकित्सास्तीति । अज्ञश्चाश्रद्दधानश्च संशयात्मा विनश्यतीति श्रुतिस्मृतिभ्यस्तत्, त्यक्त्वा देहावसाने कृतार्थे निश्चित्यान्तर्बहिश्च यथासंभवं सदा भगवत्सेवामेव कुर्यात् । अयमुपदेशो हीनमध्यमौ प्रति । उत्तमस्य तु सेवाया एव स्वतः पुरुषार्थत्वादिति । ननु सर्वदा सेवाकृतेरशक्यत्वात् कथं कृतार्थतेत्यत आहुः ॥ एकापीत्यादि ॥ यद्येवं तर्हि सर्वदा करणस्य किं प्रयोजनमत आहु ॥ परं विद्यमानेत्यादि ॥ नित्यप्रलयपक्षे प्रतिक्षणं तस्यान्यत्वेऽपि स्थूलतया स एवेति प्रत्यभिज्ञानेनैक्यात् बहिर्भजने च तस्योपकारित्वेन तत्प्रत्युपकारस्यावश्यकत्वात्तथेत्यर्थः । यद्वा, निष्कृत्यर्थमिति प्रतिपत्त्यर्थम् । तथाच यथा एकदण्डादिधर्मो ज्ञानेंद्रियप्रतिपत्तिभूतास्तथेयं भक्तदेहप्रतिपत्तिभूता । अन्यथा तस्येवास्यापि लौकिकासक्त्या बंधः स्यादत सदा कार्येत्यर्थः । एवञ्च पूर्वोक्तविचारोऽपि बहिरङ्गसेवायत् सेवारूप एवेति न सेवाभङ्गः कदापीत्यर्थस्यापि बोधनाय मूले, सदेत्युक्तम् ॥ अन्यथा भावनान्तरेण सेवाकौण्ट्यादेर्घं न वदेयुरिति दिक् ॥ ननु क्वेत्यादि ॥ एवं सेवोपदेशेऽपि तस्या देशगृहसेवकद्रव्यभाण्डादिसापेक्षत्वात्तदलाभे धर्मादिवदस्या अप्यऽसामर्थ्यं स्यादिति तन्निवृत्त्यर्थं तदपेक्षापरित्यागमाहेत्यर्थः ॥ क्वेति ॥ ग्रामे, गृहे, वने, देवालये वा ॥ कथमिति ॥ गृहसेवकभाण्डादिकं संपाद्यासंपाद्य यथा तथा वा । अत्रोत्तरं विवृण्वन्ति ॥ सापेक्षमित्यादि ॥ तथाच सापेक्षस्यासमर्थत्वात् सर्वापेक्षां परित्यज्य । भगवता, मय्यर्पणं च मनसः सर्वकामविवर्जनमित्युक्तत्वात् । मूलं साधना-

वैक्षाजनके फलापेक्षायुक्तं मनस्तद्भगवदर्थे भगवत्कामनायां स्थाप-
यित्वा साधनाभावाद्वैकल्यं बहिःसेवायां ज्ञानमपि निवार्य चित्तस्य
सहनशीलतासंपादनेन दृढं यच्चित्तं तेन निरस्य चित्तं भगवत्येव
स्थिरीकृत्य, पिता माता यथा पुत्रस्य माऽऽःकरोत्यपि तु हितमेव
कुरुते तथा भगवानपि मम करिष्यत्येवेति दृढविश्वासं कृत्वा लौ-
किकयुक्त्या बाहिर्मुख्याजनकेनोपायचातुर्येण यथैव बाहिर्मुख्याभा-
वस्तथैव कार्यमित्यर्थः । शेषं स्फुटम् ॥ उपदिदेशेति ॥ मदर्थेष्वङ्गचेष्टा
चेति भगवतोक्तत्वात्तत्र कथम्भावाकाङ्क्षायां सैवोपदिष्टेत्यर्थः । त-
थाच सेवाया आधिदैविकत्वाद्यैकान्त्याय यथा बाहिर्मुख्यं न भवति
तथा विधेयमिति भावः । ननु लौकिकोपायचातुरीकरणे बाहिर्मुख्यं
प्राप्तावसरमिति तस्य कथमनुकूल्य इत्यत आहुः ॥ तदुक्तीत्या-
दि ॥ तद्विमुखत्वमिति ॥ कायेत्यादि ॥ तथाच साभिलाषाया परस्त्रि-
याः कामनायाम् स्मृतौ तस्यां प्रवृत्तौ न स्वभावतः कामे प्रवृत्तिः,
किन्तु शास्त्रेण । तथा सेवार्थं तावन्मात्रकरणेऽपि न स्वभावतस्तथा
कृतिरिति तथाकरणे बाहिर्मुख्यमपि न भविष्यतीत्यर्थः । ननु भव-
त्वेवं तथापि भगवति यत्समर्पणीयं तदुत्तममेव समर्पणीयमिति त-
दर्थमधिकमपि लोकानुरञ्जनाद्यर्थं प्रतिबन्धकनिवृत्त्यर्थं च लौकिक-
चातुर्यप्राप्तौ पुनर्बाहिर्मुख्यप्राप्तिरिति तन्निवृत्त्यर्थमाहुः ॥ भगवदित्या-
दि ॥ तथाचैवमक्लिष्टस्य सन्मार्गेणोपार्जने तावदपि तत्र भविष्यती-
त्यर्थः । एतदेव बोधयितुमाहुः ॥ इतरेत्यादि ॥ २३१ ॥ २३२ ॥ २३३॥
२३४ ॥ ननु किमर्थमेतावान् प्रयासः । मन्त्रेण मानसपूजाकरणे सुखेन
सिद्धिरितिचेत् तत्राहुः ॥ सेवेत्यादि ॥ आदरः परिचर्यायामित्यादि
पृथगादरोपदेशाद्विना मत्सेवनं जना इति भक्तिलक्षणवाक्येऽप्युप-
देशात्, सेवानुरक्तमनसामभवोऽपि फल्गुरिति फलाधिक्योपदेशा-
च्च सेवैव मुख्येत्यर्थः । एवञ्चात्र साधनेषूपदिश्यमाना पूजापि समी-
पे स्थित्वा यथायोग्यकरणरूपत्वात् प्रधानमेवात्वेनैव विवक्षिता, न
तु वेदतन्त्राद्युक्तपूजात्वेन । प्रकारभेदात् फलभेदाच्च पूजाया भक्ति-
त्वमायातीति भक्तिहंसे निर्णयात्तत्र प्रकारभेदादप्रामाणिकत्वं श-
ङ्कामेकादशोनविंशे द्वादशाध्यायोक्तां भक्तिं हृदिकृत्य श्रद्धामृत-
कथायां म इत्यादिना भक्तिपरप्रकारकथनं, एवं धर्मैर्मनुष्याणा-
मुद्धवात्मनिवेदिनामिति साधनदशायामपि आत्मनिवेदनपूर्वकत्व-

कथनाद्यदात्मन्यर्पितं शान्तं चित्तं सत्त्वोपबृंहितं, धर्मं ज्ञानं सवैराग्यमैश्वर्यं चाभिपद्यते * यदर्पितं तद्विकल्प इन्द्रियैः परिधावति * रजस्वलं चासन्निष्ठं चित्तं विद्धि विपर्ययमिति द्वाभ्यां मनस आत्मनि भगवत्यर्पणे गुणस्यात्मविकल्पेष्वर्पणे दोषस्य, धर्मो मद्भक्तिकृत्प्रोक्त इति तृतीये धर्मादिचतुष्कस्वरूपस्य च कथनेन प्रकारान्तराणां विक्षेपकतायाश्चित्तैकाग्र्यस्यैवं सेवोपयोग्यत्वस्य तत्फलोपधायकतायाश्च सूचनात्। सल्लक्षणे, आज्ञायैवं गुणान् दोषान्मयादिष्टानपि स्वकान् * धर्मान् संत्यज्य यः सर्वान्मां भजेत् स च सत्तम इति सर्वधर्मत्यागपूर्वकभजनकर्तुः सत्तमत्वोक्तेश्च वैधप्रकारातिरिक्तप्रकारस्यैव विवक्षितत्वेनाप्रामाणिकत्वाभावात् । आश्रयेतेत्यनुवृत्तौ देवासुरमनुष्येषु मद्भक्ताचरितानि चेतिभक्ताचरणाश्रयणस्याज्ञापनास्तथाकर्तुरस्युत्कृष्टत्व त् । तस्मात्त्वमुद्धवोत्सृज्य नोदनामिति * जिज्ञासायां संप्रवृत्तो नाद्रियेत् कर्मचोदनामिति वाक्याच्च तस्यैव प्रत्युतानादरणीयत्वाच्च । नच, भक्त्या संजातया भक्त्येत्यत्र नवविधाया अपि भक्तिकारणताबोधनात्तन्मध्यपातिनोऽर्चनस्य मन्त्रन्यासादिपूर्वकत्वेऽपि तथात्वानपायात् पञ्चरात्रादिभगवच्छास्त्रसिद्धत्वाद्, जगन्नाथादिषु तदादरदर्शनाच्च तत्प्रकारत्यागोऽनुचित इति शङ्क्यम् । भक्तियोगः पुरैवोक्त इत्यत्र प्रजल्पभक्तेरेव मुख्यतयाभिसंहितत्वात् तस्याश्चावैधत्वाद्भगवतापि, तस्मात्त्वमुद्धवोत्सृज्येति श्लोकद्वयोक्तविस्तारस्यस्यात्र बोधनायैव, पुनश्च कथयिष्यामीति प्रतिज्ञायां पुनः पदकथनात् । क्रियायोगान्तर्गतार्चनप्रशंसकस्य, एतद्धि सर्ववर्णानामिति वाक्यस्योत्तरतया, न ह्यन्तोऽनन्तपारस्येति कथनेनानादरसूचनाच्च भगवतैवोपेक्षितत्वेनानुचितत्वात् । नच तर्हि वैदिकप्रकार एव ग्राह्य इति शङ्क्यम् । नाहं वेदैरिति गीतावाक्ये तपआदीनां पृथगुक्त्या, वेदैरिति बहुवचने तदितरयावत्साधनसंग्रहात्तेषां सर्वेषां निवृत्तावर्चनस्यापि तथात्वात्तत्प्रकारत्यागस्यापि प्राप्तेः । तस्मादेतत्प्रकारकभजनातिरिक्त एव स्थले तस्य वैदिकप्रकारस्य आवश्यकत्वं, नात्र । ये तु घण्टाशङ्खनादाधिवासनादयस्तेऽपि भक्ताचरितत्वादेव, न तु तन्त्राद्युक्तत्वेनेति न कोऽपि शङ्कालेश इति दिक् । अत्रैतद् बोध्यम् । शुद्धः कृष्णं भजेदिति सिद्धान्ताच्छुद्धिः स्वस्यान्येषां चापेक्षिता । सा च लोके दुर्घटेतिभगवता आत्मनिवेदनं पूर्व-

सुखम् । तथ, इष्टं दत्तं तपो जप्तं वित्तं यच्चात्मनः प्रियम् * दारान् सुतान् गृहान् प्राणान् यत् परस्मै निवेदनमिति विधिपूर्वकमेव सिद्धं योगेश्वरवाक्येषु । एतदेव साक्षाद्भगवतोक्तं सिद्धान्तरहस्ये ब्रह्मसंबन्धकरणादित्यादिना । तेन समर्पणोत्तरं सर्वत्र दोषाभावात् प्रतीयमानानां चाभासमात्रत्वाद् गङ्गाजलन्यायेन न्यूनभावाच्च दुष्टैरेवार्थैः सहायैश्च सेवा कार्येति तादृश्येवात्र मुख्यतयोपदिश्यत इति । एवञ्च पूर्वोक्तरीतिभिरान्तरशोधनमपि मन्दिरसंमार्जनरूपमेव । एवमेवात्रत्यमन्यदप्यवगन्तव्यमिति दिक् । एवं सेवामुपदिश्य तदेकदेशभूतायाः पूजाया अपि, परिनिष्ठा तु पूजायामिति वाक्यादावश्यकत्वमिति तस्याः कानिचित् साधनान्युद्देष्टुमाहुः ॥ प्रधानावृत्तावित्यादि ॥ प्रधानं पूजा ॥ अङ्गानीति ॥ वैशेषिकाणि शङ्खचक्रधारणादीनि ॥ अनेनेत्यादि ॥ एवञ्च बहुकालपूजने स कृत्स्नेनाङ्गेनोपकार इत्यपि सिद्ध्यति ॥ २३५ ॥ अभेत्यादि ॥ नन्वेवं सर्वदाकरणे वैदिकादिधर्माणां कालबाधस्तथाच प्रत्यवाय इत्याशङ्कायां 'तदभावाय तेषामङ्गत्वमा'हेत्यर्थः ॥ तथाच, इष्टं दत्तं हुतमिति, सन्ध्योपास्त्यादिकर्माणि विधिना नोदितानि मे * पूजान्ते कल्पयेत् सम्यक् संकल्पः कर्मपावन इति, धर्मः स्वनुष्ठित इति, धर्मो मद्भक्तिकृत्प्रोक्त इत्यादिवाक्यैस्तेषामङ्गत्वात्तत्करणे कुर्वतामिति वाक्यात् प्रत्यवायासंभव । सर्वेऽप्यहं त्वां सर्वपापेभ्यो मोक्षयिष्यामीति भगवद्वाक्याच्च भगवानेव रक्षितेति न काचिच्चिन्तेति भावः । स्वधर्मान् व्याकुर्वन्ति ॥ अग्निहोत्रादय इति ॥ आदिपदेन वर्णाश्रमधर्मा विवक्षिताः । एकादशस्कन्धे तत्तद्वर्णाश्रमधर्मानुक्त्वा, एतत्तेऽभिहितं साधो भवान् पृच्छति यच्च माम् * यथा स्वधर्मसंयुक्तो भक्तो मां समियात् परमिति भगवद्वाक्यात् । अत्र, शुश्रूषणं द्विजगवां देवानां चाप्यमायया इत्युक्तः शूद्रस्य वर्णधर्मो द्विगुणीभूयोपयुज्यते, यदि गुर्वादिसेवात्मको भवतीति बोध्यम् । विष्णुपुराणे शूद्रस्य पत्न्यन्तोपदेशात् । एवमनिषिद्धः स्त्रीधर्मोऽपि तथात्वाद् बोध्य । तत्करणे विशेषो मूल उक्तः । स्वधर्माचरणे शास्त्रोक्ति । इदमर्थं तृतीयस्कन्धाष्टविंशाध्यायस्थम् तत्रैव सुबोधिन्यां व्याख्यातम् । स्वधर्माणां देहधर्माणां वर्णाश्रमाधिकारनिष्ठानामाचरणं यथाशक्त्या कर्तव्यं, न तु शक्तावपि सङ्कोच । शास्त्रमपि यच्छक्नुयात् तत् कुर्यादितीति । तेन ते तथा कर्तव्या इत्य-

र्थ. । एवमेकमङ्गं निरूप्य विहिताकरण इव निषिद्धकरणेऽपि भगवानेव रक्षक इति तत्करणे को दोष इति शङ्कानिवृत्त्यर्थं विधर्मादिनिवर्तनमिति द्वितीयं निरूपयन्तो विधर्माणां स्वरूपमाहु ॥ विधर्मा निषिद्धा इति ॥ तेऽपि तत्रैव विवृता. । धर्मबाधो विधर्मः स्यात् । यस्मिन् क्रियमाणे स्वस्य धर्मस्य बाधो भवति, स यथाधिकारमवसेय । यावद्देहोऽय तावद्वर्णाश्रमधर्मा एव स्वधर्माः । भगवद्धर्मादयोऽपि विधर्मो. परधर्मा वा । यदा पुनरात्मानं जीवं भिन्नं मन्यते सद्गु तद्व्यतिरिक्त तदा दास्य स्वधर्म. । अन्ये वर्णाश्रमादयोऽपि परधर्मा । यदा पुनर्भगवद्भावं प्राप्तस्तदा अलौकिकधर्मा ऋषभादिषु गोचर्यादय स्वधर्मा अन्ये परधर्मा इति । एवञ्च निषिद्धा इत्यनेन धर्मबाधरूपा श्रुत्यादिनिषिद्धा दास्यविरुद्धा श्रुत्याद्युक्ताश्च परिगृहीता । विधर्माश्चेति चकारेण परधर्मादयश्चत्वार संगृहीता. । स च सप्तमस्कन्ध उक्ता । विधर्म परधर्मश्च आभास उपमा छल. * अधर्मशाखा पञ्चेमा धर्मज्ञोऽधर्मवत् त्यजेदिति । एतल्लक्षणमपि तत्रैव, धर्मबाधो विधर्म. स्यात् परधर्मोऽन्यचोदित उपधर्मस्तु पाषण्डो दम्भो वा शब्दभिच्छल * यस्त्विच्छया कृत. पुम्भिराभासो ह्याश्रमात् पृथगिति । ते च विवृता श्रीधरीये– धर्मबुद्ध्यापि यस्मिन् क्रियमाणे स्वधर्मो बाध्येत स विधर्म. । अन्यस्य चोदितोऽन्यस्य परधर्म । यथा ब्राह्मणस्य धर्मे क्षत्रियादे. परधर्म. । उपमेति व्याचष्टे । उपधर्म इति । स च पाषण्ड , दम्भो वा । शब्दस्य भिद् भेदोऽन्यथा व्याख्यानं यस्मिन् स छल । यथा दशावरान् भोजयेदित्युक्तं दशभ्य अवरानिति । शब्दभृदिति पाठे धर्मशब्दमात्रं बिभर्तीति तथा । यथा, गा दद्यादित्युक्ते मरिष्यन्त्या गोदानमिति ॥ स्वरूपमेव निरूप्य तेभ्यो निवर्त्तनमनुपदेन शास्त्रा प्राप्त निषेधन्ति ॥ नाव दान्तयंति ॥ अधर्मकरणे हीनजन्मन पूर्वमुक्तत्वेन तत्करणे तत्सम्भवादिति भाव । नन्वपि चेत् सुदुराचारो भजते मामनन्यभाक् * साधुरेव स मन्तव्य सम्यग्व्यवसितो हि स इति भगवद्वाक्ये दुराचारस्यापि साधुत्वकथनाद्यथाकारी यथाचारी तथा भवतीति श्रुतौ धर्माचारयोर्भेदकथनेनाचारपदस्य स्वाभाविकेन्द्रियप्रवृत्तौ पर्यवसानात् तस्य दुष्टत्वेऽप्यनन्यभक्तस्यादुष्टत्वात् तस्मान्मद्भक्तियुक्तस्येति वाक्ये वैराग्यस्याश्रेयस्त्वकथनेन वैराग्यस्येव प्र-

स्युत मुख्यत्वाभावेन्द्रियविनिग्रहः किमित्युपदिश्यत इत्यत आहुः ॥ इन्द्रियाणीत्यादि ॥ अयमर्थः । पूर्वं स्वग्रन्थानुसारेण महाराजोपचारैर्भगवत्पूजाव्यवस्थापनात् ततो भगवत्प्रसादस्य नानाविधस्य भक्तेभ्यो दानं विधाय स्वस्य भोगो यः प्राप्तः सोऽपि नेन्द्रियप्रियत्वेन कर्तव्यः, किन्तु भगवत्प्रसादत्वेन । तथापि सामग्रीपरीक्षार्थं यथाग्रे भोगसामग्री न दुष्येत् तथा भगवान् रसात्मकः स्त्रीणां च विशेषत उद्धारकः । किं बहुना लौकिका अपि गायकास्तदीयामेव कामलीलां विशेषतो गायन्तीति तादृशां मत्सदृशानां सङ्गमेन स्वस्य कामोत्कर्षे तदिन्द्रियं निग्राह्यम् । योऽप्यनिन्दितो भोगः सोऽपि सेवाबाधकीभूतकामानवसंकरेणैव करणीयो, नेन्द्रियप्रियत्वेनेति । अत्र सूत्रे, विनिग्राह्य इति विशब्देन विवेकधैर्याश्रये, अङ्कुरेणापि कर्तव्यं स्वस्यासामर्थ्यमात्रत्वादिति यदुक्तं तत् समर्थ्यते । अर्थस्तु यदि स्वयमिन्द्रियकार्याणां त्यागे असमर्थः, स्वभावविजयः शौर्यमित्येकादशे शौर्यलक्षणात् तादृशातद्भावेनासुरत्वाद्वा तेन स्वस्यासामर्थ्यसाधनं विधायेन्द्रियकार्यत्यजनं कर्तव्यमिति । तत्प्रकारस्तु— ये समृद्धा महाभोगवन्तः सुरतादिशौण्डास्तत्सकाशं, कियन्मत्सामर्थ्यं, को वा मे भोगः, किम् उपकरणं नायिका वा, येन तत्रासज्ज्य स्वपुरुषार्थं नाशयामीत्येकः । सोऽप्येकादशे भगवतोक्तः । रजस्तमोभ्यां यदपि विद्वान् विक्षिप्तधीः पुनः * अतन्द्रितो मनो युञ्जन् दोषदृष्टिर्न सज्जत इति । यद्यैवं यत्नमप्यशक्तः स तु, कुणपमयाश्च तान् कामान् दुःखोदर्कांश्च गर्ह्यानित्येतादृशोक्तरीत्या स्वस्य तस्यासामर्थ्यं भावयेदित्यपरः । न च पूर्वोक्तगीतावाक्यविरोधः शङ्क्यः । तत्र दुराचारपदस्य पूर्वावस्थाबोधकत्वेन भजनोत्तरं तथात्वस्याऽलाभात् । क्षिप्रं भवति धर्मात्मा शश्वच्छान्तिं निगच्छतीत्युत्तरवाक्येन तथा निश्चयात् । धर्मो मद्भक्तिकृत्प्रोक्त इतिलक्षणकस्यैव तस्य तत्र विवक्षितत्वात् । नापि, तस्मान्मद्भक्तियुक्तस्येति वाक्यविरोधः । ततः पूर्वस्मिन् संदर्भे, जातश्रद्धो मत्कथास्वित्यादिना असमर्थाधिकारमेव प्रस्तुत्य तादृशस्य भजनमेव कर्तव्यत्वेन विधाय ज्ञानवैराग्ययोरभावे कथं कर्मसंग्रहरिति शङ्कानिवृत्त्यर्थं प्रोक्तेन भक्तियोगेनेति द्वाभ्यां तयोः कार्यं भक्त्यैव भविष्यतीति बोधनेन उक्तवाक्येऽपि योगिमदात्मपदाभ्यां निरुद्धचित्तवृत्तिकस्य भगवदेकात्मत्व-

योर्बोधनेन च सेवापरिकरात्मकविषयवैराग्यस्यैवाश्रेयस्त्वेन दुष्टत्वसिद्ध्या तद्व्यतिरिक्तवैराग्यस्य दुष्टत्वासिद्धेः। न च फलप्रकरणे भगवता मिथोभजनं विनिन्द्य, भजन्त्यभजतो ये वा इत्यादिश्लोकद्वये संभावितापवादस्याभजद्भजनस्य निरपवादधर्मत्वेन कथनाद् द्वितीयं भजद्भजनकर्तॄणां केषाञ्चिद् कृतघ्नत्वगुरुध्रुहत्वकथनाच्च। यथा छान्दोग्ये वामदेव्यसामोपासकस्य, न काञ्चन परिहरेदिति श्रुत्या सर्वाभिगामित्वमनुज्ञातं तथाच भक्तविशेषस्य तदनुज्ञैव प्रतीयत इति नात्र दोषसंभव इति वाच्यम्। तत्रापि पूर्ववत्, करुणा पितरौ यथेत्यनेन करुणारूपस्य वैदिकस्य, स्नेहरूपस्य लौकिकस्य बोधनेन धर्मार्थे तस्मिन् प्रत्युपकारसंभावनाराहित्य एव धर्मोत्पत्त्या तथात्वात्। ब्राह्मणस्य कामपरवशस्य प्राणत्राणार्थं गमनं धर्मो निरनुबन्ध इति कामसूत्रे वैशिके वात्स्यायनेनापि कथनाच्च। भारते आनुशासनिके सुदर्शनोपाख्यानेऽपि, प्राणाश्च मम दाराश्च यच्चान्यद्विद्यते वसु * अतिथिभ्यो मया देयमिति मे व्रतमाहितमिति कथनात्। तादृशाभिसन्धिनिर्वाह एव सुदर्शनौघवत्योर्दम्पत्योः सदेहयोः स्वर्गकथनात्। कूटमुद्गरहस्तस्तु मृत्युस्तं हन्तुमभ्ययात् * हीनप्रतिज्ञ इत्येवं वधिष्यामीति नि[illegible] व्रतभङ्गे मृत्युदण्डस्योक्तत्वाच्च। तथाऽतिथिपूजानिर्वाह एव तस्य धर्मत्वावगमात्। सांप्रतं मृत्युप्रासाभिसंधयनिर्वाहयोर्दर्शनेन तस्य दोषत्वस्य वज्रलेपायितत्वात्। सुबोधिन्यामपि धर्मार्थे तस्मिन् भजदर्थं प्रतियोगिना प्रायश्चित्तं विधेयमित्युक्तत्वात् टिप्पण्यामपि प्रतियोगिकृतप्रायश्चित्तस्य भजतिफलसाधकताया उपपादनाच्च। स्नेहनिमित्तके तस्मिन् पितृदृष्टान्तेन निरुपाधित्वपूर्वजन्मीनसंबन्धयोः सूचनात् प्रत्युपकारसंभावनाराहित्ये क्रियमाणप्रत्युपकारानङ्गीकारे च सौहृदानुपङ्गेन धर्मस्य गौणतया भवनाङ्गीकाराच्च। तत्रापि निर्वाह एव कथञ्चनादुष्टत्वमिति तस्य दुरवगमत्वेन श्रोत्रियस्य ब्रह्मचारिणो व्रतिनो लिङ्गिनो चार्मां दृष्ट्वा [illegible] मुमूर्षोर्मित्रवाक्यादानृशंस्याच्च गमनं धर्मोऽधर्मो वेति संशय इति वैशिकवात्स्यायनसूत्रोक्तस्थलवत् संदिग्धतया दुष्टत्वात् अत्र समासौ, तेषां स्वच्छन्दचरितं बुद्धिमान्न तदा चरेत् * नैतत् समाचरेज्जातु मनसापि ह्यनीश्वरः * विनश्यत्याचरन् मौढ्याद्यथा रुद्रोऽब्धिजं विषमितिवाक्याभ्यां निषेधनाशयोर्बोधनेन

सुबोधिन्याम् । अनीश्वरकृतस्यास्यानिष्टजनकत्वमिति व्याख्यानेन यथैश्वर्यकामनायामनीश्वरो बधमर्हति यथा महाराज्ञामधिकारी तदिच्छां कुर्वन्निति मनसापि करणे दण्डव्याख्यानेन ऐश्वर्यज्ञानवैराग्यैर्यत् करोति तत्स्वच्छन्दचरितमित्युच्यते । युधिष्ठिरस्तत्राचरदिति च व्याख्यानेन तथावगमाच्च । न च निषेधादिकं रासप्रकरणविषयकमिति वाच्यम् । राजप्रश्नोपसरत्वात् । प्रश्ने परदाराभिमर्शनस्यैवोक्तत्वात् । न च, यत्पादपङ्कजपरागनिषेधतृप्ता इत्यत्र भक्तयोगिज्ञानिनां स्वैराचरणस्यावध्यकर्तृत्वेनानुवादाद्भक्तानां न तद् दोषावहमिति वाच्यम् । तत्र पूर्वोक्तानां प्रमाणानामनुवादेनास्मदादिषु तस्योदाहृतत्वमशक्यत्वात् । निषेधतृप्ता इतिकथनात् । नचैवं सत्यमृतकार्ये स्वैराचरणमपि तेषामशक्यवचनमिति वाच्यम् । मार्कण्डेयपुराणोक्तसङ्गनिवृत्तिप्रयोजनकद्यूताश्रयसुरापानादिवत् सुवचत्वात् । अत एव, कुर्वन्ति हि त्वयि नित्यप्रियपद्व्याख्याने कालापरिच्छेद्यस्यैव प्रियस्य सेवा कर्तव्येत्युक्तम् । अन्यथा जारसेवापि धर्मः स्यादिति च । विमोहितोऽयं जन इत्यत्र मुचुकुन्दस्तुतौ च । पुन्नाम्नो नरकात्त्रायत इति वाक्यात् पुत्रशब्देन नरक उच्यते । योषिच्छब्देन च सुतरां नरकम् । बालाबुकानां इत्यन्येषां इति, स सोमो नातिमुक्तेत्यादिश्रुतिभिः स्त्रीणां निन्दाश्रवणादित्युक्तम् । सुखानुभवस्तु भ्रान्त्यानुभवतुल्यः । युक्तिबाधितत्वात् । धर्मे बाधस्य प्रत्यक्षसिद्धत्वात् । अन्योन्यसापेक्षतया तत्र प्रवृत्तेरन्यतरस्य तदपूर्तौ सुखाभावस्यापि दर्शनाच्च । नच प्रजापतिरमृतमानन्द इत्युपस्थे इति श्रुत्या वैषयिकानन्दस्य मोक्षदृष्टान्तत्वेनोक्तेर्नैवं साधीय इति वाच्यम् । इति मानुषीः समाप्ता इति मानुषप्रकरणानन्तरम् । अथ दैवीरित्युपक्रमस्य भेदनात् तत्र मानुषसुखस्यानभिप्रेतत्वेन तस्य दृष्टान्ततया अवाच्यवचनत्वात् । परमानिर्वृत्या परो बोधनीय इति लौकिकानामर्थे दृष्टान्तत्वेन कीर्तनेऽपि वस्तुतस्तदभावात् । तस्या उपासनार्थत्वेनाप्युपपत्तेश्च । ननु तत्प्रतिष्ठेत्युपासीतेत्यादेर्नेयोपासनाया अग्रे वाच्यत्वादेवं युक्तमिति चेत् । ओम् । तथा सत्याविर्भूते रसे दैवेषु तदस्तु, रसाविर्भावस्तु न सर्वात्मभावव्यतिरेकेण । तत्र च भगवानानन्दमयोऽन्नपेक्ष इति जीवानां ततः सुखलाभः । लोके तु परस्परपक्षत्वान्न तथा युक्तम् । न च यं रससमाप्तौ भगवान् रसात्मनाऽत्र करोति । तत आभावे, न दुष्ट इति

शङ्खचक्रादिकं धार्यं मृदा पूजाङ्गमेव तत् ॥
तुलसीकाष्ठजामाला तिलकं लिङ्गमेव तत् ॥ २४२ ॥
एकादश्युपवासादि कर्त्तव्यं वेधवर्जितम् ॥
तथा कृष्णाष्टमी चापि सप्तमीवेधवर्जिता ॥
अन्यान्यपि तथा कुर्यादुत्सवो यत्र वै हरेः ॥ २४३ ॥
एतत् सर्वं प्रयत्नेन गृहस्थस्य प्रकीर्त्तितम् ॥
अन्येषां संभवेत्तु स्याद्यतेः पर्यटनं वरम् ॥ ४४ ॥
विक्षेपादथवा शक्त्या प्रतिबन्धादपि क्वचित् ॥
अस्याग्रहप्रवेशे वा परपीडादिसंभवे ॥
तीर्थपर्यटनं श्रेष्ठं सर्वेषां वर्णिनां तथा ॥ २४५ ॥

अत्र वैष्णवमार्गे वेदमार्गाविरोधो यत्र तत्र कर्त्तव्यम् । यन्नित्यो धर्मो भवेत् ॥ नित्येऽपि वेदविरोधः सोढव्य इत्याह ॥ शङ्खचक्रादिकं धार्यमिति ॥ वह्निनैव तु संयुक्तं चक्रमादाय वैष्णवः * धारयेत् सर्ववर्णानां हरिसालोक्यकाम्ययेति । तप्तमुद्राधारणं काम्यम् । शङ्खचक्रं मृदा यस्तु कुर्यात्तप्तायसेन वा * स शूद्रवद् बहिष्कार्यः सर्वस्माद् द्विजकर्मण इति स्मृतिविरोधश्च । शङ्खादिचिह्नरहितः पूजां यस्तु समाचरेत् * निष्फलं पूजनं तस्य हरिश्चापि न तुष्यति । अतो मृदा शङ्खचक्रादिधारणं पूजाङ्गमवश्यं कर्त्तव्यम् । निषेधस्तु केवल एव, न पापण्डत्वसम्पादकः । मृदा निषेधमुपक्रम्य तप्तायसे पर्यवसानवचनाच्च । किञ्च । ब्राह्मणस्य धारणं निषिद्धं, वैष्णवस्य च विहितम् । तत्र ब्राह्मणश्चेद्वैष्णवो भवेद् तत्र पूर्वात् परबलीयस्त्वन्यायेन वचनमिति वैष्णव-

ऽनुसरणं कर्त्तव्यम् । न च पाषण्डत्वसम्भवः । किं पुनः प्रणाः पुण्या इति वाक्यात् प्रमाणप्रमेययोः प्रमेयं बलिष्ठमिति वेदानिषिद्धदेवतापरत्व एव पाषण्डत्वमिति स्थितिः । धर्मविधी नात्र बाधकः । तत उक्तं शङ्खचक्रादिकं मुद्रा पूजाङ्गत्वेन धार्यमिति । तथा तुलसीकाष्ठजा मालापि धार्या । तस्या यद्यपि नित्यत्वं तथापि वैष्णवत्वज्ञापिका परम्परासिद्धा । तदुल्लङ्घने पारम्पर्यं बाध्येतेति नित्यतुल्या माला । किञ्च, धारयन्ति न ये मालां हैतुकाः पापबुद्धयः ॥ नरकान्न निवर्त्तन्ते दग्धाः कोपाग्निना हरेरिति वचनान्नित्यत्वमपि । तिलकं च दण्डाऽऽकारं ललाटे स्यात् पद्माकारं तु वक्षसि ॥ वेणुपत्रनिभं बाह्वोरन्यद्दीपाकृतिर्भवेदिति तिलकं माला च यज्ञोपवीतवद्वैष्णवत्वबोधकम् ॥ एकादशीव्रतं च पञ्चम्यादिवर्जितं कर्त्तव्यम् । पूर्वमन्यथा करणेऽपि भगवन्मार्गप्रवेशानन्तरं पञ्चपञ्चाशद्घटिका दशमी चेत्तदैकादशी त्याज्या । जन्माष्टमी तु सूर्योदयानन्तरं सप्तमी चेत्तदा त्याज्या उदयादुदयात् मोक्षा हरिवासरवर्जिता इति वाक्यात् । अन्यान्यपि रामनवमीप्रभृतिव्रतानि भगवन्मार्गे कर्त्तव्यानि । नृसिंहजयन्तीव्रतमुत्सवश्चैकत्रैव कर्त्तव्यम् । तथा वामनजयन्त्युत्सवकरणे एकादश्यामुपोषणमकृत्वापि द्वादश्यामुपोषणं कर्त्तव्यम् । किं बहुनोत्सवः प्रधानभूतः । भुक्त्वा चोत्सवो निषिद्धः । भगवदावेशाभावात् । एवं पूजामार्गे उत्सवयात्रासहिता पूजा कर्त्तव्येति निरूपितम् । उपसंहरति ॥एतत्सर्वमिति॥ गृहस्थस्यैतन्मुख्यम् । एवं कुर्वन् सकुटुम्बो ममवत्सायुज्यमश्नुते । ब्रह्मचारिप्रभृतीनामपि सेवकसाधनसम्पत्त्यावेनम् कर्त्तव्यम् । अन्यथान्य एवोपायः कर्त्तव्यः । तमग्रे वक्ष्यति । संन्यासिनस्तु पूर्वापेक्षयाऽप्याग्रिम एवोत्तम एवमित्याह ॥ यतेः पर्यटनं परमिति ॥ २४२॥२४३॥२४४॥

गृहस्थानामपि पूजायां यत्र दोषसम्भवे पर्यटनमेव श्रेष्ठमित्याह ॥ विक्षेपादिति ॥ स्वतः प्रवृत्तिरहितानीन्द्रियाणि बलाद्भगवति योज्यमानानि विक्षेपं जनयन्ति विग्रहकर्शितानि । जरया व्याधिभिर्वा यदा शरत्यभावो, लोका वा प्रतिबन्धं कुर्वन्ति, स्वस्य वा परम आग्रह उत्पद्यते । येन तमसि प्रविष्टो भगवन्तं न स्मरति । लोकानां वा पीडां कुर्यात् । तत्र पूजा त्यक्तव्या । तदा अन्यत्रापि तथात्वे परदेशे शून्यदेवालये पूजा विधेया । तत्रापि दोषसम्भवे तीर्थपर्यटनं कर्त्तव्यम् । पापानां प्रतिबन्धकरूपाणां नाशाय । तदा यत्रैव गत्वा सेवा सम्पत्स्यते तत्रैव सेवा कर्त्तव्या । स्वतन्त्रतया तीर्थाटनप्रकारमाह ॥ सर्वेषामिति ॥ विष्णुभक्तिप्रकारत्वात् सर्वाधिकारः ॥ २४८ ॥

एवं सेवानिर्वाहोपायमुपदिश्य रामानुजमाध्वादिमार्गादिव धाहिःप्रकारेऽपि वैलक्षण्यं वक्तुमाहुः ॥ अत्र वैष्णवेत्यादि ॥ अनित्य इति ॥ नित्यभिन्न काम्य इति यावत् ॥ अपि वेदविरोध इति ॥ वेदविरोधोऽपीत्यर्थः । किन्तु तिरस्कारकमेतत् । एतस्यापि प्रयोजनं कालातिक्रमेऽविहितभक्तौ च दोषाप्रसङ्गः । धारणे उपपत्तिर्मूले उक्ता ॥ पूजाङ्गमेव नविति ॥ यतस्तत् तथा अतः पूजाया व्यङ्गत्वपरिहाराय तदावश्यकमेव । तदेतदुपपादयितुमाहुः ॥ वहिर्वैधेत्यादि ॥ मत इति ॥ काम्यत्वानिषिद्धत्वाभ्यामपि नित्यत्वानपायात् । ननु तप्तशङ्खाद्यङ्गीकारे भवतु काम्यत्वाभावस्तथापि निषेधस्य का गतिरित्यत आहुः ॥ निषेधस्त्वित्यादि ॥ तथाच निन्दास्मृतौ पूजानुद्देशात्तद्रहिते सप्रतिषेधः, पूजाङ्गत्वेन धारकेषु न पाषण्डत्वाद्यापादक इत्यर्थः । एतदाढ्यार्थं श्रुतिसिद्धं युक्त्यन्तरमाहुः ॥ मृदेत्यादि ॥ तथाच यथा श्रुतौ, निर्यासस्य नादेयं प्रकाशदत्यार्थे होप वर्ण इत्युपक्रम्याग्रे यो लोहितो यो वा प्रश्चनान्निर्यन्ति तस्य नादेयमिति पर्यवसानवचनम् । तेन तस्यैव निषेधस्तथात्रापि तप्तायस एव पर्यवसानवचनाद्, धाराब्द एवकारार्थताया अपि शक्यवचनत्वाच्च तत्रैव निषेधसंक्रमो, न तु मृदा धारणेऽपीत्यर्थः । ननु भवत्येव यदि पूजावाक्ये ब्राह्मणपदं भवेत् । तत्र

तु, य इति सामान्यवचनम् । तच्च शूद्रादिपरतयापि नेतुं शक्यमतो नेदं युक्तिः साधीयसीत्याशङ्कायां पूर्वोक्तमर्थं न्यायेनोपोद्बलयन्ति ॥ ब्राह्मणस्येत्यादि ॥ तथाच सिद्धवति पूर्वस्मात् कार्ये परविधानवैयर्थ्यापत्तिरिति पूर्वात् परं बलीय एव । तथा सति स्मृतौ द्विजपदात् संस्कारमात्रशालिनो वैष्णवत्वरहिता ये तान् प्रति स्मृतिः साधिकेति न वैष्णवधर्मत्वेन शङ्खचक्रधर्तुर्निन्दकेति तथेति भावः । इममेवार्थं द्रढयन्ति ॥ नचेत्यादि ॥ तुष्यतु दुर्जन इति न्यायेन वैष्णवं प्रत्यपि निषेधमङ्गीकृत्य पूर्वोक्तं समर्थयन्ति ॥ प्रमाणेत्यादि ॥ तथाच यथा, वेदं कृत्वा वेदिं करोतीत्यत्र वेदकरणोत्तरं श्रुते आध्वमनेन प्रीतोऽपि वैदिकक्रमो बाध्यते, शुद्धिरूपस्य प्रमेयस्य बलिष्ठत्वात् । तथा प्रकृतेऽपि वचनापेक्षया पूजाया बलिष्ठत्वात् सर्वपापेभ्यो मोक्षयिष्यामीति भगवद्वाक्याच्च जातेऽपि दोषे निवृत्तिसंभव इत्यर्थः । नन्वेवं सति पाषण्डत्वस्यापि संभव इत्यत आहुः ॥ वेदेत्यादि ॥ वेदविरुद्धदेवताऽर्हद्बुद्धादिरूपा सेवा ॥ अत्रेति ॥ ब्राह्मणत्वे । तथाच यदि धर्मविरोधो बाधकः स्याद्धत्तवृधासप्रभृतीनामपि पाषण्डता स्यात् । यदि तत्र योगजधर्मेण समाधेयं तर्ह्यत्र भगवद्धर्मेणेति तुल्यम् । वचनानामनुमयत्र तौल्यादित्यर्थः । एतेन तप्तशङ्खचक्रधारणे श्रुतिमुदाहरन्तो माध्वादयोऽपि प्रत्युक्ता बोध्याः । तदुदाहृतश्रुतिषु नित्यलिङ्गस्याभावात् । फलकथनेन काम्यताप्रतीतेश्च । पुराणस्यश्रुतिमालम्ब्य यथाकथञ्चिद्धर्मसमर्थनेऽपि तत्तद्बाधकश्रुतिविरोधस्य कामाधिकारबोधकश्रुतिविरोधवत् सोढव्यत्वात् । एतान्यपि तु कर्माणीतिवत् तन्निषेधवचनस्यापि दर्शनात् । एतदेवोक्तं, धर्मविरोधो नात्र बाधक इति ॥ माध्वादिकल्पितश्रुतिभ्यः शङ्खादीनां तप्तरूपो यो धर्मः सोऽत्र मुद्राधारणे बाधको नेत्यर्थः । एवं समर्थयित्वा सिद्धमाहुः ॥ तन इत्यादि ॥ एतद्दर्शितं शङ्खचक्रधारणवादे मया सम्यक् प्रपञ्चितमिति विशेषजिज्ञासायां ततोऽवधेयम् । एवं शङ्खचक्रादिधारणस्य नित्यत्वं स्थापयित्वा तुलसीमालायां तदतिदिशन्ति ॥ नचेत्यादि ॥ तस्या नित्यत्वं, न बहुवाक्यासिद्धमिति तथात्वाय प्रकारमाहुः ॥ तस्या इत्यादि ॥ तथाच साधूनां समयस्यापि प्रमाणं वेदवद्भवतीति महाभाष्ये तथोक्तेरिति भावः । एवञ्च, देवासुरमनुष्येषु भद्रकाचरितानि चेति वाक्यमप्यनुगुणं भवतीति ज्ञेयम् ।

अत्रापि विशेषो मालाधारणवादाद् बोध्यः । मार्गान्तरात् तिलके विशेषं वक्तुं प्रकारमाहुः ॥ तिलकं चेत्यादि ॥ तिलकमालयोर्बहिरङ्गत्वबोधनाय तत्स्वरूपमाहुः ॥ तिलकमित्यादि ॥ तेनान्तरस्यान्तरङ्गानांचाभावे नद्किञ्चित्करमेवेत्यर्थः . अत्रत्योऽपि विशेष ऊर्ध्वपुण्ड्रवादादवगन्तव्यः । एवं बहिरङ्गान् भगवता साक्षादनुक्तानपि सूचितत्वादिशिश्य भगवता भक्तिकारणेषु, मदीयव्रतधारणमित्युक्तत्वात्तानि विवक्षितानि बोधयितुं, यात्राबलिविधानं च सर्ववार्षिकपर्वसु * मम पर्वानुमोदनम् । पृथक्सत्रेण वा मह्यं पर्वयात्रामहोत्सवान् * कारयेन्नृत्यगीताद्यैर्महाराजविभूतिभिरित्यादिभगवद्वाक्यैरुत्सवादीनामप्युक्तत्वात्तेषामपि दिङ्मात्रेण निर्णयं बोधयितुमाहुः ॥ एकादशीत्यादि ॥ अत्रापि मार्गान्तरीयो विशेषमाहुः ॥ पूर्वमित्यादि ॥ इदं यथा तथा मया संवत्सरोत्सवनिर्णयप्रस्ताने सम्यग् उपपादितमिति तत एव विभावनीयम् । अत्र नृसिंहजयन्त्यादौ, चेत्पदतथापदाभ्यां तयोः प्रायिकत्वं बोधितम् । तत्र बीजमिदं प्रतिभाति । श्रीभागवते एतयोरवतारत्वेन निरूपणान्नृसिंहतापनीये विष्णोर्मुर्खामिति श्रुतौ च पूर्णत्वानिरूपणादुपास्यत्वाद्युक्त्या पुराणेषु व्रतविधायकानिकयचोदनाच्च यस्य पुरुषोत्तमत्वस्फूर्तिस्तेन कार्यम् । मदीयव्रतधारणमिति भगवताऽऽज्ञापनात् । यस्य तु न तथा स्फूर्तिस्तेन न कार्यम् । साक्षाद्भगवद्व्रतत्वस्य तं प्रत्यभावेन तद्व्रताज्ञाया अप्यऽभावात् । तथा सति तत्तदुपासकान् प्रत्येव नित्यत्वं, न त्वन्यान् प्रत्यपीति । अत एव, सर्वासां तु जयन्तीनां श्रेष्ठा कृष्णाष्टमी मता * यस्मात् संनिहितात्यन्तं तत्रैवोपवसेन्नरः * सर्वास्वपि जयन्तीषु पूजा कार्या विशेषतः * सांनिध्य एव कर्तव्य उपवासो न दूरग इति भारद्वाजसंहितावचनं, स्मृत्यर्थसागराख्ये माध्वग्रन्थे दृश्यते । सांनिध्य इति–मूलरूपसंनिधाने । दूरग इति–अंशकलागामी । तथा सति तत्तदुपासकान् प्रत्येव नित्यत्वं तयोर्न त्वन्यान् प्रत्यपीति अधिकारिविशेषमादाय कृताकृतत्वबोधनार्थमुक्तिरिति दिक् । एवं सर्वं निरूप्यैतद्गुणमेहरलि ॥ एवं पूजेत्यादि ॥ पूजाप्रधाने सेवामार्गे । उत्सवा जन्माष्टम्यादयः । यात्रा दोलयात्रादयः । पर्वाणि दीपावलीनवरात्रादीनि बोध्यानि । यद्यपि पर्वाण्यत्र नोक्तानि तथापि साहचर्यात् संप्रदायाच्च बोध्यानि । गृहस्थस्यैतन्मुख्यत्वे बीजमाहुः ॥ एवं

अथवा सर्वदा शास्त्रं श्रीभागवतमादरात् ॥
पठनीयं प्रयत्नेन सर्वहेतुविवर्जितम् ॥ २५१ ॥
वृत्त्यर्थं नैव युञ्जीत प्राणैः कण्ठगतैरपि ॥
तदभावे यथैव स्यात्तथा निर्वाहमाचरेत् ॥
तयाणां येन केनापि भजन् कृष्णमवाप्नुयात् ॥ २५२ ॥
जगन्नाथे विट्ठले च श्रीरङ्गे वेङ्कटे तथा ॥
यत्र पूजाप्रवाहः स्यात्तत्र तिष्ठेत तत्परः ॥
एतन्मार्गद्वयं प्रोक्तं गतिसाधनसंयुतम् ॥ २५३ ॥

पक्ष इति ॥ भारते हि यज्ञानां तीर्थानां च तुल्यता निरूपिता । तत्राटनप्रकारमाह ॥ अतस्तेष्वप्रतिग्राहीति ॥ तीर्थप्रवेशदिवसे तूपवासः । अग्रिमदिवसे यद्यन्नमात्रमपि नास्ति तदा तावन्मात्रं ग्राह्यं, न तु ततोऽधिकम् । अटनस्य नित्यत्वान्न चिरकालं स्थितिः । उच्चैर्नामसङ्कीर्तनं तत्राङ्गम् । अन्तर्भगवत्स्मरणं च । एकाकी पर्यटेत् । नात्र, नैकः प्रपद्येताध्वानमिति स्मृतिदोषः । पथि भोगाद्यर्थं स्पृहा न कर्त्तव्या ॥ शान्तश्च चित्ते भवेत् । एवमधिकाराभावे भिन्नमुपायं वक्ष्यति । कृष्ण एव तात्पर्यम् । न तु तीर्थादौ । देहपातनपर्यन्तं च पर्यटनम् । देहान्ते कृतार्थो भविष्यामीति । सदा शुद्धश्च भवेत् । संध्यावन्दनवत् प्रत्यहं तस्य गमनम् । अस्मिन् पक्षे अन्तः कृष्णः सदा स्फुरतीत्युत्तमोत्तमम् । अत्र संमत्यर्थं भगवदुक्तश्लोकद्वयमाह ॥ गृहं, धनमिति ॥ २४६ ॥ २४७ ॥ २४८ ॥ २४९ ॥ २५० ॥ पूर्वाधिकारद्वयाभावे तृतीयं पक्षमाह ॥ अथवेति ॥ बाह्याभ्यन्तरभेदेन रूपे भेदद्वयं मतं, नाम्नि चैकम् । ततस्त्रेधा भक्तिमार्गो निरूपितः ।

अथार्चिमार्गमाह ॥ जगन्नाथे विट्ठले चेति ॥ विकल्प एवैषां स्थानानाम् । प्रपत्तौ ब्रह्मास्त्रन्यायस्य बाधकत्वात् । पूजाप्रकारो भगवत्सान्निध्यप्रबोधकः । एवं वैदिको भक्तिमार्गश्च निरूपित इत्याह ॥ एतन्मार्गद्वयं मोक्षायेति ॥ २५१ ॥ २५२ ॥ २५३ ॥

अथ कश्चिद्विशेषमाहुः ॥ यज्ञैरित्यादि ॥ उत्थानमेतत् ॥ तुल्यता निरूपितेति तथाहि । तीर्थचिन्तामणौ, ऋषिभिः क्रतवः प्रोक्ता वेदेष्विह यथाक्रमम् फलं चैव यथातत्त्वं प्रेत्य चेह च सर्वशः * न ते शक्या दरिद्रेण यज्ञाः प्राप्तुं महीपते । बहूपकरणा यज्ञा नानासंभारविस्तराः । प्राप्यन्ते पार्थिवैरेव समृद्धैर्वा नरैः क्वचित् । नार्थन्यूनैरवगणैरेकात्मभिरसंहतैः । यो दरिद्रैरपि विधिः शक्यः प्राप्तुं नरेश्वर । तुल्यो यज्ञफलैः पुण्यैस्तन्निबोध युधां वर । ऋषीणां परमं गुह्यमिदमुक्तं मयाऽनघ । तीर्थाभिगमनं पुण्यं यज्ञैरपि विशिष्यते । अनुपोष्य त्रिरात्राणि तीर्थान्यनभिगम्य च । अदत्वा काञ्चनं गाश्च दरिद्रो जायते नरः अग्निष्टोमादिभिर्यज्ञैरिष्ट्वा विपुलदक्षिणैः । न तत्फलमवाप्नोति तीर्थाभिगमनेन यदिति ॥ अपरमपि विशेषमाहुर्मूले ॥ हरिणा कृता, इत्यनेन ॥ भगवता यज्ञाः कृताः, बलदेवरूपेण तीर्थानि च यतः कृतानि, अतोऽपि साम्यमिति भावः ॥ २४६ ॥ २४७ ॥ २४८ ॥ २४९ ॥ २५० ॥ अथवेत्यादि ॥ अत्र यः पाठ उक्तः स, वर्णाश्रमवतां धर्म इत्युपक्रमे वर्णानां ब्राह्मणक्षत्रियविट्शूद्राणामित्युक्तत्वाच्चतुर्णां वर्णानां वा त्रैवर्णिकानां वेति प्रसङ्गाद्विचार्यते । तत्र, भारतव्यपदेशेन आम्नायार्थश्च दर्शितः * दृश्यते यत्र वै धर्मः स्त्रीशूद्रादिभिरप्युतेति प्रथमस्कन्धे । विप्रोऽधीत्याप्नुयात् प्रज्ञां राजन्योदधिमेखलाम * वैश्यो निधिपतित्वं च शूद्रः शुद्ध्येत पातकादिति द्वादशस्कन्धे च धर्मदर्शनश्रीभागवताध्ययनयोर्बोधनात् । तस्माद्भारत सर्वात्मेत्यत्राभयेच्छायां सर्वसाधारण्येन कीर्तनविधानाच्च सर्वमेव भागवतं सर्वे पठेयुरिति प्राप्ते । अभिधीयते । ब्रह्मज्ञानमार्गांशव्यतिरिक्तमेव पठनीयम् । धर्मब्रह्मणोरतीन्द्रियत्वेन प्रथमवाक्ये दर्शमुख्यार्थस्य ग्रहीतुमशक्यतया धर्मादिशब्दज्ञानमात्रार्थकत्वेन पाठाप्रापकत्वात् । द्वितीयेऽप्यधीत्येत्यस्य स्मरणाध्ययनसाधारण्यात् स्मृत्वा गुरुमुखाद्वा गृहीत्वेत्यर्थसंदेहेन तथात्वात् । नच स्वाध्यायब्राह्मणश्रुतौ प्रा-

ऊसीलः स्वाध्यायमधीयीतेत्यादौ केवलोच्चारणेऽपि तथा प्रयोगाप्तत्प्राप्तिरिति वाच्यम्। विनिगमनाविरहात्। नचैतः पूर्वं, य एतां श्रावयेदिति सर्वां संहितां, पठन्नवदनन् प्रयत इति पठं च प्रक्रम्य विप्रोऽधीत्येति श्लोककथनादुपक्रम एव विनिगमकोऽस्त्विति वाच्यम्। तत्र श्रावणोत्तरं पठनस्योक्ततया श्रावणानुसारिपाठप्राप्त्या सर्वपाठाप्राप्तेः। नचात्र सर्वस्यैव श्रावणमिति वक्तुं युक्तम्। कपिलदेवैः स्वमातुरव्यौपनिषद्भागवतज्ञानयोरनुक्तत्वेन स्त्रीशूद्रयोस्तदंशाश्रावणे तयोस्तच्छ्रवणानधिकारे च सिद्धेः। शूद्रयोनावहं जातो-मातोऽन्यद्वक्तुमुत्सहे * कुमारस्य तु या बुद्धिर्वेद तां श श्वतीमह-मित्युद्योगे सनत्सुजीतायारम्भे विदुरवाक्याज्ज्ञानोत्तरमपि वक्तनानधिकारे च सिद्धे श्रवणपठनयोः पठन एव वा तावदंशत्यागस्यैवौचित्यात्। अत एव तृतीयस्कन्धनिबन्धे श्रीमदाचार्यैरपि, यदौपनिषदं ज्ञानं श्रीभागवतमेव वा * वर्णिनामेव तद्धि स्यात् स्त्रीशूद्राणां ततोऽन्यथेति कारिकया भागवतज्ञानमपि त्रैवर्णिकानामेव। उपासनायाः प्राधान्यात्। यदेव भगवता ब्रह्मणे प्रोच्यते तत् त्रैवर्णिकानामेवेति ज्ञातव्यमिति तत्प्रकाशग्रन्थेन च तथैव निर्णीतत्वात्। नचैकादशस्कन्धेऽप्येष तेऽभिहितः कृत्स्नो ब्रह्मवादस्य संग्रह इति कथनाच्चतुःश्लोकीतुल्यतयोपदेशस्य तत्रापि सत्वात् तत्राप्यनधिकारः शङ्क्यः। तदग्रे, नैतत्त्वयादाम्भिकाय नास्तिकाय शठाय च * अशुश्रूषोरभक्ताय दुर्विनीताय दीयताम्। एतैर्दोषैर्विहीनाय ब्रह्मण्याय प्रियाय च। साधवे शुचये ब्रूयाद् भक्तिः स्याच्छूद्रयोषिताम् इति कथनात्। कर्मज्ञानादिमिश्रतयोपदेशाच्च तादृशां श्रावणे बाधकाभावेन तत्र तेषां श्रवणाधिकारस्य सिद्धेः। अन्यथा तद्विरोधापत्तेश्च। यत्तु, ब्राह्मणो ब्रह्मवर्चस्वी राजन्यो जगतीपतिः * वैश्यः पठन् विट्पतिः स्याच्छूद्रः सत्तमतामियादिति चतुर्थस्कन्धीयम्। तत्तु पृथुचरितमुपक्रम्य पठितत्वात् प्रकरणावरुद्धमिति न तेन सर्वपाठ प्रापयितुं शक्यते। नचाऽभयेच्छायां तदर्थं कीर्तनस्य विरोधः शङ्क्यः। तत्र भगवत एव कथनाच्छ्रीभागवतपदाभावाद्योक्तैकदेशातिरिक्तभागवतकीर्तनादपि तत्परिहारसिद्धेः। नच, देवोऽसुरो मनुष्यो वोन वाक्यात् सर्वेऽधिकारिणो ह्यत्र विष्णुभक्तौ यथेति दृष्टान्तकथनाच्च भगवद्भक्तेः सर्वाधिकारत्वमभिप्रेत्यात्र त्रेधा भक्तिमार्ग उपदिष्टः। तत्र रूपसेवा-

रे यदाऽनधिकारस्तदा सहस्रनामस्तोत्रं नामावली च । सिद्धान्तमुक्तावली तु शास्त्रस्य संग्रहरूपा । पुष्टिप्रवाहमर्यादाग्रन्थो भक्तिहंसश्च मार्गस्वरूपादिविवेचकतयास्यैव प्रकरणस्य शेषौ । बालबोधोऽपि तथा । संन्यासनिर्णयस्तु त्यागशेषः स्फुट एवेति सर्वाण्येव प्रकरणान्येवं बोध्यानि । अत्रायं क्रमः प्रतिभाति । पूर्वं भगवत्कृपाङ्कुरस्य स्वतः संस्कारेण भगवन्मार्गीयसंगादिना वा उद्बोधे मार्गेऽस्मिन् रुचिस्ततोऽस्मिन् प्रवेशेच्छा । तथाप्यङ्कुरस्य दृढत्वेऽस्मिन् मार्गे पूर्वोक्तरीत्या स्वस्य सर्वोत्तमत्वमानं प्रवेशश्च । द्वारभूतगुरुद्वारा शरणागतिः । ततः स्वस्य द्वारभूतगुरोर्वा सङ्गेन शिक्षया वा श्रीमदाचार्यचरणेषु भगवदभेदबुद्धिः । सर्वोत्तमादिभिस्तद्भजनम् । तत एतन्मार्गीयसङ्गं पूर्वोक्तरीत्या भगवद्भजनं, ग्रन्थावलोकनश्रवणादिना च तत्तत्प्रतिबन्धनिवृत्तौ दोषनिवृत्तिः । सेवोपयोगिगुणोपचयश्च । तत एतदावर्तते मकुटुम्बस्य भगवत्प्राप्तिस्तत्राप्युदासीनप्रतिकूलयोर्न । चर्पणीशब्दव्याख्यानां तु यत्किञ्चित् फलं परं परिभ्रमणमेव । पञ्चदोषसंभवे तु तीर्थाटनं, दोषनिवृत्तौ पुनः सेवया पूर्वोक्तरीतिकं फलम् । सेवाधिकारे तु श्रीभागवतार्थश्च उक्तरीत्या । तत्राप्यनधिकारे सहस्रनामनामावल्योर्यथोक्तरीतिक आश्रयः । उत्तमाधिकारे तु पर्यटनम् । अत्राप्यनधिकारे भगवत्प्रपन्नतया अदूरे विप्रकर्षे वा स्थितिः सहस्रनामाद्यावर्तनसहायस्य । एवं करणे एतन्मार्गीयफलोन्मुखत्वं फलं च । आरम्भदशायां पापादिना पुनरावृत्तिः । पाकदशायां यथाकथञ्चित् पापे तु पापस्यैव नाश इति सिद्ध्यति । येद्दस्तु कालेन निर्मल इति तन्मार्गे इदानीमसिद्धस्य फलायालमिति भगवन्मार्गाङ्गतयाऽत्रैव प्रविशतीति । गुरुणावेशादिना मार्गरुचिं परीक्ष्य जिज्ञासां चागतस्य प्रश्नानन्तरं सेवादिकमुपदेष्टव्यमिति । यस्तु नामाद्युपदेशोऽधिकाराभावेऽपीदानीन्तनैः क्रियते, सोऽपि जानता कृतः स्वगृह्यमाणद्रव्यशुद्धौ तेन बन्धाभावेन्नपर्यवस्यति । अजानता कृतस्तु स्वस्मिन् दोषादोषयोः सन्देहे पर्यवस्यतीति । इदं यथा तथा उपदेशवादे वृत्तिवादे च विवेचितमिति ततोऽवधेयमिति दिक् ॥

प्रकृतमनुसरामः । मूले, एतन्मार्गद्वयमित्यत्राद्वयत्वं मुख्यापेक्षया बोध्यम् । प्रपत्तिमार्गस्य भक्तिमार्गानुकल्पत्वादिति । गतिसाधनसंकुलमित्यत्र गतिशब्दः फलवाची । सा काष्ठा सा परा गतिरि-

ति श्रुतौ तथासिद्धेः । एवं फलप्रकरणे प्रमाणानुरोधिना मुख्यप्रमेयस्य फलं विचारितम् । अतः परं गुरुमूलस्य तस्य फलं वैराग्यार्थं विचारयन्ति । धूमादिमार्गस्य तृतीयमार्गस्य च, को हि तद्वेद यदमुष्मिँल्लोकेऽस्ति न वेति, यामिमां पुष्पितां वाचमिति, कर्मण्यनास्थास इति यथायथं श्रुतिगीताश्रीभागवतेषु निन्दितत्वेऽपि प्रमाणानुरोधितायां सत्त्वेन तद्फलविचारस्यावश्यकत्वात् ॥२५१॥२५२॥२५३॥

कर्ममार्गे प्रवक्ष्यामि भ्रान्तानां बहुशः फलम् ॥
अयथाज्ञानतः कर्म कुर्वाणास्त्रिविधा मताः ॥ २५४ ॥
सात्त्विकादिविभेदेन कर्म चाऽपि त्रिधा भवेत् ॥
सात्त्विकः सात्त्विकं कर्म यथाश्रुतिपरः कृती ॥
स्वर्गलोकस्तस्य सिद्ध्येद्विमानस्त्रीभिरावृतः ॥ २५५ ॥
पुण्यस्य तु तिरोधाने पतत्यधोऽकुशिरास्ततः ॥
पुण्यांशं समादाय समीचीनेषु जायते ॥ २५६ ॥
राजसं कर्म कुर्वाणो मेर्वादिसुखभाग् भवेत् ॥
तामसं कर्म कुर्वाणः पाताले सुखभाग् यथा ॥ २५७ ॥
राजसः सात्त्विकं कुर्वन् दैत्यस्वर्गेषु जायते ॥
राजसं कर्म कुर्वाणश्चन्द्रलोके सुखी भवेत् ॥
वृष्टिद्वारान्नरूपः सन् रेतोयोनिषु जायते ॥ २५८ ॥
तामसं कर्म कुर्वाणो यक्षलोके सुखी भवेत् ॥
तामसः सात्त्विकं कुर्वन् पितृलोके महीयते ॥
राजसं कर्म कुर्वाणो भूतादिसुखमाप्नुयात् ॥ २५९ ॥
तामसं कर्म कुर्वाणः सर्पादिसुखभुग् भवेत् ॥

सर्वेषां पुनरावृत्तिस्तथा कर्म्म पुनर्भवः ॥
एवं त्रयीधर्मपरा गतागतमवाप्नुयुः ॥ २६० ॥
तत्तद्देवोपासकानामाजन्मोपासने फलम् ॥
तत्तत्सायुज्यरूपादि वेदोक्तानामनेकधा ॥
पौराणिकानां च तथा निषिद्धेतरभावतः ॥ २६१ ॥
यजन्ते सात्त्विका देवान् यक्षरक्षांसि राजसाः ॥
प्रेतान् भूतगणांश्चान्ये यजन्ते तामसा जनाः ॥२६२॥
विहितानेककर्त्तॄणां देहान्ते यदुपासनम् ॥
तत्सायुज्यादिसिद्धिः स्यात्तत्त्वोपोऽन्यस्य वै फलम्॥२६३॥
कर्मणां गहना रीतिर्ब्रह्मणापि न बुध्यते ॥
ईश्वरत्वात्तदिच्छायाः प्रधानत्वादनेकधा ॥
तदुद्रेकोऽवसाने स्यात् कृपाक्रोधविभेदतः ॥ २६४ ॥
कृपयाऽधमतां प्राप्य भक्तं वै मोचयेत् क्वचित् ॥
अनियुक्तपरस्यानां पीडया क्रोधतः क्वचित् ॥
हीनभावं नयत्येव दुष्टं वा मोचयेत् क्वचित् ॥ २६५ ॥
कर्मणो ह्यपि बोद्धव्यं बोद्धव्यं च विकर्मणः ॥
अकर्मणश्च बोद्धव्यं गहना कर्मणो गतिः ॥ २६६ ॥
अतश्च सुतरामेव कर्ममार्गो दुरत्ययः ॥
अतोऽपि भजनं कार्यं भजनेन हि तादृशम् ॥२६७॥
अन्योन्यनाशकत्वं च कर्मणां भवति क्वचित् ॥

कर्ममार्गे फलं तस्मान्न निरूप्यं हि सर्वथा ॥ २६८ ॥

सर्वत्रैव जगति फलं वर्तत इति सर्वत्र फलं साधनं चाह ॥ कर्म्ममार्ग इति ॥ कर्मणो नानामार्गत्वं स्वभावगुणभेदात् । तामसः कदापि न सात्त्विकं कर्म करोति । कुर्वन् वा तामसप्रकारेणैव करोति । अतो नव भेदा गीतायां निरूपिताः । कर्ता सात्त्विक उच्यते, यत्तत् सात्त्विकमुच्यते इत्यादिना । ऊर्ध्वं गच्छन्ति सत्त्वस्था इति वाक्यात् कर्मणस्त्रैविध्ये सात्त्विक एवोर्ध्वादिषु गच्छति । तथा राजसोऽपि दक्षिणमार्गे गच्छन् दैत्यस्वर्गेषु चन्द्रलोके पक्षलोके च सुखमनुभवति। सर्वेषां सङ्ग्रहार्थं सत्त्वादित्रयालम्बेन फलकल्पना । पितृलोको भूर्लोकः सर्पलोकश्चेति । तामसानां फलं नवविधं निरूप्य भगवद्वाक्येनोपसंहरति ॥ एवं त्रयीधर्मपरा इति ॥ प्रकीर्णकफलं बहुधा नानादेवोपासकानां फलमाह ॥ तत्तद्देवोपासकानामिति ॥ वेदोक्तानामग्न्यादीनां देवोपासनाबुद्ध्या अग्निहोत्रादिकरणे भेदबुद्धेर्विद्यमानत्वात् तत्तद्देवतासायुज्यम् । पौराणिकाः दुर्गागणपतिप्रभृतयः ॥ २५५ ॥ २५६ ॥ २५६ ॥ ॥ २५७ ॥ २५८ ॥ २५९ ॥ २६० ॥ २६१ ॥ विष्णुं परित्यज्य तद्भजनं न कोऽपि करिष्यतीत्याशङ्क्य भगवद्वाक्यमाह ॥ यजन्ते सात्त्विका देवानिति ॥ एकदा बहुदेवोपासनायां कर्मप्राधान्यात् कर्ममार्गीयमेव फलं नोपासनाफलम् । क्रमेण भक्त्या तत्तद्देवतोपासनायां फलमाह ॥ विहितानेकेति ॥ अन्तिमस्य शीघ्रप्रसादे पूर्वेषामप्यनुग्राहेतुः ॥ २६२ ॥ २६३ ॥ एवमुपासनायां नियतं फलमुपपाद्य कर्ममार्गे फलस्यानियतत्वमाह ॥ कर्मणामिति ॥ कर्माणि त्रिविधानि निषिद्धानि महान्तं पतन्ति, तथा निषिद्धे विहितानि । तेन कस्य फलं भवेदिति सर्वेषामेव शङ्का । तत्र हेतुमाह ॥ ईश्वरत्वादिति ॥ कर्मस्वरूपी भगवानीश्वरः स्वेच्छया

किंरूपोऽभिव्यक्तो भवेदिति न ज्ञायते। अतो त्रिविध्यर्थं इति न फलं नियतम् । यतोऽनेकधा तदुद्रेकः। तत्रापि देहावसाने यत् कर्म तदेव फलदायकम् । तत्रेश्वरेच्छया किंरूपोऽभिव्यक्तो भवेदिति न ज्ञायते । यदि जीवे कृपा तदा शुभरूपेण, क्रोधे त्वशुभरूपेणेति निर्णयः । तदेवोपपादयति ॥ कृपयेति ॥ अधमतां प्राप्य स्थितं भक्तं कृपया कचिन्मोचयेत् ॥ इति निषिद्धस्यान्ते सद्रूपेणाविर्भावः । विहितस्यान्ते निषिद्धरूपेणाविर्भावमाह ॥ अनियुक्ततपस्यानामिति ॥ आज्ञाव्यतिरेकेण ये तपः कुर्वन्ति तेषामन्ते भगवतः पीडया क्रोधो भवति । मां चैवान्तः शरीरस्थमिति वाक्यात् । तदा हीनभावं नयति, नरकं, श्वादियोनिं वा । भगवदिच्छया तुष्टश्चेत् तमपि कचिन्मोचयेत् । अत ईश्वरचर्या दुर्विभाव्या ॥२६४॥२६५॥ अत एव भगवान् स्वाभिप्रायं कर्ममार्गे निरूपयतीत्याह॥ कर्मणो ह्यपि बोद्धव्यमिति ॥ विहितेऽपि विचारः कर्त्तव्यः । किं भगवदिच्छाऽस्ति । तथा सति कर्त्तव्यं, नो चेन्न कर्त्तव्यमिति । तथा विकर्मणस्तूष्णीम्भावादपि । कलावग्निहोत्रादिकं न कर्त्तव्यमिति । अत्रापि विचारः कर्त्तव्यः। किमीश्वरेच्छा करणेऽकरणे वेति । तथा निषिद्धेऽपि विचारः कर्त्तव्यः । किं ब्राह्मणः हन्तव्यो न वेति । भगवदिच्छायां हननमेव हितकारि । यथा द्रोणादीनाम् । अत एव कर्मणो गतिर्गहना ॥ फलं दुर्निरूपमित्यर्थः । उपसंहरति ॥ अतश्च सुतरामेवेति ॥ तर्हि किं कर्त्तव्यमित्याकाङ्क्षायामाह ॥ अतोऽपि भजनं कार्यमिति । ननु भजनेऽप्येवं चेत् को विशेषः स्यादत आह ॥ भजनेन हि तादृशमिति ॥ भगवदिच्छाभावेऽपि भजने भजनमेव परं न निर्वहेत्।न त्वनिष्टं किञ्चित् ॥ २६६ ॥ २६७ ॥

न केवलमीश्वरेच्छैव कर्मफले मतिबन्धिका, किन्त्वन्यदप्यस्तीत्याह ॥ अन्योन्यनाशकत्वमिति ॥ अनवसरे नमस्कारादर्द

पुण्यं विनश्यति । अजारजः खररजो हन्तिपुण्यं पुराकृतमिति । बहुनाशकं कर्मफलं स्यात् । तथा त्रेधोपशमे गान्धार्याः पुत्रशतं नष्टम् । अतिथिर्विमुखो यातः पुण्यमादाय गच्छति । उपसंहरति ॥ कर्ममार्गे फलं तस्मादिति ॥ २६८ ॥

सर्वत्रैवेत्यादि । एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्तीति श्रुतेः । तदंशाभिव्यक्तकर्मभूत आनन्द. फलं, तत् सर्वत्र जगति वर्तते इति सर्वेषु तदंशभूतेषु लोकेषु सुखरूपं फलं तत्साधनभूतं वैदिकं कर्म च तद्वाञ्छानिवृत्त्यर्थं पूर्वोक्ताक्षयत्वरूपतया स्फुटीकरोतीत्यर्थः । ननु ज्ञानं विना कर्मासंभवाज्ज्ञाने सति कर्मणां कथं भ्रान्तत्वमित्याशङ्कयाऽयथाज्ञानत इत्यादि व्याकुर्वन्त आहुः ॥ कर्मणो नानात्वमित्यादि ॥ गीतायां, ज्ञानं ज्ञेयं परिज्ञातेत्यत्र ज्ञानपदेन करणमुच्यते । तद्विमर्शे, येनेति नेत्रीन्यादिनिर्देशात् । ज्ञेयपदेन तादृक्करणैर्ज्ञायमाने लौकिकं वस्तूच्यते । तच्चैकविधमेव । यत्तु यस्यादिरन्तश्च स वै मध्यं च तस्य सदित्याद्येकादशाध्याये तस्यैकरूपताभिधानात्, सात्त्विकानां तथानुभवाच्च त्रैविध्यानुक्तेश्च । परिज्ञाता त्वन्तःकरणमेव वृत्त्यधिकरणत्वात् । करणकर्मपदाभ्यां च कर्मेन्द्रियचेष्टे उच्येते । कर्तृपदेन सोपाधिको जिवमन्तःकरणमेवोच्यते । गुणा अपि नोदासीना बन्धकाः, किन्तु तच्चित्तजा एव तथा । सत्त्वं रजस्तम इति गुणा जीवस्य नैव मे * चित्तजा यैस्तु भूतानां सज्जमानो निबध्यत इत्येकादशे भगवद्वाक्यात् । सात्त्विककरणैर्ज्ञायमानमपि ज्ञानं प्रकृतिवैलक्षण्यमेवावगाहते, न तु ब्रह्मकैवल्यम् । यत्तु यस्मादिदिति पूर्वोक्तवाक्यात् अतस्तदप्यन्यथाज्ञानमेव । एवं सति तादृग्ज्ञानेन तादृशैस्त्रिविधकरणैस्तादृशान्तःकरणाभिमन्ता यत् कुर्वन्ति तस्य कर्मणो प्रज्ञानजपादर्थ्यनानात्वं तत्, चित्तस्वभावभूतानां जीवनानाविधत्वापादकानां गुणानां भेदादित्यर्थः । तस्मायथाज्ञानादेव कर्मनानात्वसिद्धेः कर्तृकर्मणोः किमिति त्रैविध्यमुक्तमित्याकाङ्क्षायां तत्तात्पर्यमेव विशदयन्ति ॥ तामस इत्यादि ॥ एवं सिद्धे तेषां भ्रान्तत्वे वर्णभेदं नवधा निरूपयं तत्राहुः ॥ ऊर्ध्वमित्यादि ॥ गच्छन्तीति ॥ उत्तरमार्गेण गच्छन्तीत्यर्थः । तावतापि न तस्योत्तमत्वमिति ज्ञापयन्ति मूले, ॥ सात्त्विक इत्यादिना ॥ इदं चैकादशस्कन्धीय-

द्वशमाध्याये, अन्तरायैरविहतो यदि धर्मं इत्यादिपञ्चश्लोकेषु स्फुटम् । शेषं च न्यायादेव सिद्ध्यति । एवं सात्त्विकस्योक्त्वा राजसस्येतो हीनत्वं बोधयितुं लोकावृत्त्यादिकमतिदिशन्ति ॥ तथेत्यादि ॥ एवं कल्पनायां बीजमाहुः ॥ सर्वेषामित्यादि ॥ सर्वेषामिति ॥ लोकानामित्यर्थः । यमलोकमार्गसंग्रहार्थं तामसानां फलमाहुः ॥ पितृलोक इत्यादि ॥ उपसंहरन्तीति ॥ मूले तथा कर्मपुनर्भव इत्यनेन पूर्वकर्मशेषभूतेन कर्मणा बीजेन स्वस्वजातीयकर्मान्तरोत्पत्तिः पुनः पुनः फलतारतम्यायोच्यते । अतः श्रुत्युक्तोऽपि मार्ग एवम्भूतश्चेत् फलतो जघन्य एवेति निगमयन्तीत्यर्थः ॥ प्रकीर्णकानामिति ॥ ज्ञानकाण्डैकदेशादिप्रतिपादितानामुपासनानाम् । यद्यप्युपासनानां मानसकर्मत्वेन कर्मण्येवान्तर्भावस्तथापि तस्यां देवताप्राधान्येन फलेऽपि प्रकारभेदाद्भिन्नतया कथनम् उपास्यानां स्वतन्त्रप्रमेयात्मकत्वेन तद्बलनिरूपणार्थं ज्ञेयम् ॥ तत्तद्देवेत्यादि ॥ अध्यायचतुष्टयात्मकं जैमिनिप्रणीतं संकर्षणकाण्डं देवताकाण्डमित्युच्यते । तदप्युपासनावत्कर्मप्रतिपादकत्वात् कर्ममीमांसान्तर्गतमेव । तद्रीत्या देवोपासने तदुपासकानां तथेत्यर्थः । एते च देवास्तत्त्वपर्यन्ताः कालपर्यन्ता वा ज्ञेयाः । एतदेव विशदयन्ति ॥ वेदोक्तानामित्यादि ॥ मूलेऽतिदिष्टोपासनाविषयाणां स्वरूपमाहुः ॥ पौराणिका इत्यादि ॥ पञ्चायतनरूपा विशिष्टदेवा इत्यर्थः । तदपि फलं दक्षिणरीत्यैवेति बोधयितुं मूले निपिद्धेतरभावत इत्युक्तम् ॥ २५४ ॥ २५५ ॥ २५६ ॥ २५७ ॥ २५८ ॥ २५९ ॥ २६० ॥ २६१ ॥ विष्णुमित्यादि ॥ बहुषु पुराणेषु विष्णोरुत्कर्षप्रतिपादनानुकरीत्या आशङ्क्य अधिकारिभेदेन तत्तज्जगोपपादकं भगवद्वाक्यमाहेत्यर्थः ॥ प्रासङ्गिकमाहुः ॥ एकदेत्यादि ॥ तत्पोषोऽन्यस्य वै फलमिति मूलोक्तेऽर्थे बीजमाहुः ॥ अन्तिममित्यादि ॥ एवमुपासनाफलनिरूपणमुखेन स्वतन्त्रप्रमेयभूतानां देवानां बलं विचारितम् ॥ २६२ ॥ २६३ ॥ अतः परं कर्मणो बलं विचारणीयम् । तस्य स्थायिभावे प्रमाणानुरोधित्वेऽपि अक्षरात्मत्वेन फलदानांशे स्वतन्त्रप्रमेयरूपत्वात् । तद्विचारयन्ति ॥ एवमुपासनायामित्यादिना ॥ ननु कथमेव कर्मणां गहनतेत्याकाङ्क्षायां तामुपपादयन्ति ॥ कर्माणीत्यादि ॥ स्वातन्त्र्यं प्रकटयन्ति ॥ कर्मस्वरूपीत्यादि ॥ अक्षरस्यैव रूपान्तरं कर्मेति पूर्वं साधितम् । अक्षरं चेनितु । एतस्यैवाक्षरस्य प्र-

शासने गार्गि द्यावापृथिवी विधृते तिष्ठतस्त्याविश्रुतेः। अतस्तदभिप्रत्वात् कर्मरूपी भगवानीश इत्यर्थः ॥ तदेव फलदायकमिति ॥ अन्ते या मतिः सा गतिरिति तावशमतिजनकतया तदेव तथेत्यर्थः । शीघमित आरभ्य कर्ममार्गो तुरत्यय इत्यन्तं स्फुटम् । एवं स्वातन्त्र्यमुपपादितम् ॥ आहेति ॥ भक्तिमार्गस्यैतो वैलक्षण्यमाहत्यर्थः ॥ अग्रे स्फुटम् ॥ २६४ ॥ २६५ । २६६ ॥ २६७ ॥ २६८ ॥

जायस्वेति म्रियस्वेति तृतीयो यदुदाहृतः ॥
प्रकीर्णकानां सर्वेषां तत्फलं परिकीर्तितम् ॥ २६९ ॥
ईश्वरालम्बनं योगो जनयित्वा तु तादृशम् ॥
बहुजन्मविपाकेन भक्तिं जनयति ध्रुवम् ॥ २७० ॥
सांख्येऽपि भगवच्चित्ते फलमेतन्न चान्यथा ॥
समर्पणात्तु कर्मणां च भक्तिर्भवति नैष्ठिकी ॥ २७१ ॥
योगेन तु निषिद्धेन यदि देहः प्रलिख्यति ॥
तदा कल्पान्तपर्यन्तं भावनास्तु सत्फलम् ॥
अन्यथा नरके पातो दृढभूमौ तु संस्थितिः २७२ ॥
छलयोगस्तथा सांख्यं शाक्तो मार्गोऽभिधीयते ॥
सिद्धान्ताश्च तथा कौला लोकातीतविभेदतः ॥ २७३ ॥
सांख्ये भेदद्वयं तत्र द्वितीयेऽनुग्रहादिकम् ॥
आद्ये लोकस्य सन्मानमन्ते तुल्यं तमस्तयोः ॥ २७४ ॥
लोके व्यामोहकं शास्त्रं सतानां बोधकः शिवः ॥
कलौ जनिष्यमाणानामसुराणां क्षयाय हि ॥
वामाः शाक्ताश्च पंगे तु प्रकटाप्रकटे मिदा ॥ २७५ ॥

प्रकृतिस्तत्र संराध्या साध्यौ योगश्च तुष्टये ॥
शैवश्च वैष्णवश्चैव उपास्ये भेदकद्वयम् ॥ २७६ ॥
कर्मासक्तास्तु ये तत्र वैदिकाः समुदाहृताः ॥
सप्तापि सर्वथा त्याज्या भगवन्मार्गवर्त्तिभिः ॥ २७७ ॥

इदानीमुपासनामार्गस्य फलमाह ॥ आयस्त्वेति ॥ वेद एव तृतीया मार्गो निरूपितः । कर्ममार्गेऽपि देवताप्राधान्ये इदमेव फलम् । प्रसङ्गाद्योगसाख्ययोः फलमाह ॥ ईश्वरालम्बनमिति ॥ योगसाख्यकर्माणि भगवदिच्छया कृतानि भक्तिं जनयन्तीत्यर्थः । एतन्नियतफलम् ॥ २६९ ॥ २७० ॥ २७१ ॥ इदानीं निषिद्धयोगमार्गादेः स्वरूपं फलं चाह ॥ योगेन त्विति ॥ निषिद्धो योगः कापालिकः महादेवेनोन्मुखेनोक्तः । तदुक्तप्रकारेण यदि देहः सिद्धस्तदा कल्पान्तपर्यतं भगवद्ध्यानात् सदेव फलम् । आदावल्पं निषिद्धं ध्याने हन्यते । देहनाशे तु नरके पातः । दृढभूमौ योगारम्भे सिद्धे जन्मान्तरे पुनः पूर्ववासनया योगाभ्यासान्मुच्यते । अतः पाक्षिकापायो मार्गः । शाक्तमार्गस्तु सर्वथैव निषिद्ध इत्यभिप्रायेणाह ॥ छठयोगस्तथा साख्यमिति ॥ सांख्ययोगौ मिलितौ धर्ममार्गविरोधेन मद्यभक्षणसुरापानादिपोषितौ । शाक्तो मार्गः, तत्र सप्तभेदाः—वैदिकाः, वैष्णवाः, शैवाः, शाक्ताः, वामाः, सिद्धान्ताः कौलाः । अतः परं नेति तेषां ग्रन्थः । तत्र स्वरूपं फलं चान्तिमयोराह ॥ सिद्धान्ताश्च तथा कौला इति ॥ सिद्धान्त आमुरं सर्वं मिथ्येति । कर्म सर्वथा त्यक्तव्यं बाधकमिति । तथा भक्तिरपि । केवलं वाचाऽऽत्मशर्मोहयन्ति ये ते सांख्याः । तेषां लोकसंग्रहो नियामकः । कौलानां तु लोकानपेक्षेति भेदः । प्रवीत्वदीक्षया रण्डाश्चण्डा अपि भजन्ति हि * दिगम्बराश्चर्मचिह्नाः सुरामांस-

परायणाः ॥ पापरूपा दुराचारास्ते कौलाः परिकीर्तिताः । तेषाम् अनुग्रहनिग्रहादि दृष्टैकफलं भवति । तन्मार्गसेवितया दुष्टानामसदाचारः सिद्धान्तस्य लोके सन्माननं फलं, ततो व्यामोहो लोकस्य भवति । सप्तानां मूलमाह ॥ बोधकः शिव इति ॥ प्रयोजनमाह ॥ कलाविति ॥ असुराणामेवात्र रुचिः । तेन तेषामेव क्षय इति न काप्यनुपपत्तिः ॥ चतुर्थपञ्चमावाह ॥ वामाः शाक्ता इति ॥ तयोरपि पूर्ववत् प्रकटाप्रकटे भिदा । तत्र त्रिपुरसुन्दर्यादिशक्तयः सेव्याः । योगश्च साध्य इति बुद्धिः । तज्ज्ञानाधिकारे शैववैष्णवौ । तस्याः शक्तेः पादत्वेन पञ्चमेनमध्ये निरूपितौ । न शब्दमात्रेण किञ्चिद् दुष्यति, पदार्थस्त्वन्य एव । अतो भूतादेरेव विष्णुशिवादिनाम धृत्वा तथोपासत इति निर्णयः । तत्र वैदिकानां लक्षणमाह ॥ कर्मासक्ता इति । लोकसंग्रहार्थं पूर्वोक्तानां सन्माननार्थं च तत्सेवकास्तथा भवन्ति । एतन्निरूपणस्य प्रयोजनमाह ॥ सप्तापि सर्वथा त्याज्या इति ॥ महापातकिसंसर्गोऽपि महापातकित्वश्रवणात् ॥ २७२ ॥ २७३ ॥ २७४ ॥ २७५ ॥ २७६ ॥ २७७ ॥

अतः परं स्वमार्गबलविचारं हृदि कृत्वा आह ॥ इदानीमुपासनेत्यादि ॥ लोके बहूनां कर्मठानां पर्यनुयोक्तृत्वात् कर्ममार्गस्य संदिग्धफलत्वे निर्बलत्वे च प्रतिपादितेऽपि नियतफलायामुपासनायां तु नाप्यं दोष इति स्वभावत उक्तस्य, यजन्ते सात्त्विका देवानित्यादिनोक्तस्य तस्य कर्ममार्गादुत्तमत्वे भविष्यतीत्याकाङ्क्षायां तस्यापि मार्गस्य फलतो जघन्यत्वं वक्तुमाहेत्यर्थः ॥ वेद पर्येत्यादि ॥ तथाच छान्दोग्ये पञ्चाग्न्युपासनोत्तर कर्मिणामनिनोधूममार्गार्चिरादिमार्गावुक्ता अपेतयोः पथोर्नैकतरेण च तानीमानि क्षुद्राण्यसकृदावर्तीनि भवन्ति जायस्व म्रियस्वेत्येतत्तृतीयं स्थानमित्यनेन ज्ञानिकर्मिव्यतिरिक्तानां तृतीय एव मार्गो निरूपित इति नास्य तत उत्तमत्वमित्ययमपि तथेत्यर्थः नन्तु पूर्वं तत्तद्देवतोपासने तत्तत्सायुज्यस्योक्तत्वाद् विद्याधरादीनामुपासनात्वेन करणे स्थित उत्तमत्वं भविष्य-

तीति शङ्कामपि प्रसङ्गादपाकुर्वन्ति ॥ कर्ममार्गे इत्यादि ॥ वेदे इष्टापूर्ते दत्तमित्युपासत इति कर्मप्राधान्य एव धूममार्गस्योक्तत्वात् तदभावे स नेति तथेत्यर्थः ॥ प्रसङ्गादित्यादि ॥ प्रसङ्गादिति ॥ स्वभावप्रसङ्गात् । तथाच भगवता गीतायां योगसांख्यकर्मार्पणानामप्युपदिष्टत्वात् तेषां भक्तिमार्गसाम्यं फलतो भविष्यतीत्याकाङ्क्षायां तेषामपि जघन्यत्वं बोधयितुमाहेत्यर्थः । मदर्पणं निष्फलं वा सात्त्विकं निजकर्म तदिति भगवद्वाक्यात् कर्मार्पणस्यापि सात्त्विकत्वं ज्ञेयम् । मूले, तादृशमिति ॥ योऽयत्रेहम् ॥ योगसांख्येत्यादि ॥ तथाच, नैवं पापमवाप्स्यसि, कर्मबन्धं प्रहास्यसि, शुभाशुभफलैरेवं मोक्ष्यसे कर्मबन्धनैरित्येव सांख्ययोगकर्मार्पणानां फलमुक्तं भगवता, न तु स्वप्राप्तिरूपम् । पाप भाव च, जन्मान्तरसहस्रेषु तपोध्यानसमाधिभिः॥ नराणां क्षीणपापानां कृष्णे भक्तिः प्रजायत इति भक्तिरेव फलत्वेनोक्तेति तथेति भावः । एवं फलमुक्त्वा पूर्वोक्तकर्मोपासनाद्यपेक्षयास्योत्तमत्वं बोधयितुमाहुः ॥एतन्नियतफलमिति॥ अतोऽपि पूर्वोक्तादुत्कृष्टमित्यर्थः। एवं सात्त्विकस्वभावफलमुक्तम् ॥२६९॥२७०॥२७१॥ इदानीमित्यादि ॥ एवं प्रमाणादित्रयेणोत्कृष्टानामपि भक्तिमार्गादपकृष्टत्वं प्रकारविशेषे त्याज्यत्वमिति स्थापयित्वाऽन्येषां प्रमाणादिभिरपकृष्टत्वेऽपि प्रलोभकत्वादपक्वदशायां तत्र प्रवृत्तिर्मा भूदिति तेषां त्याज्यत्वं वक्तुमाहेत्यर्थः ॥ निषिद्धो योगः कापालिक इत्यादि ॥ स प्रायः पाशुपताध्यतन्त्रोक्त इति प्रतिभाति ॥ तत्र हि पशुपतिना पशुपाशविमोक्षणाथातः पाशुपतं योगविधिं व्याख्यास्याम इत्यादिनाऽध्यायपञ्चकेन उक्तः । तत्र कार्यरूपो जीवः पशुः, कारणं पशुपतिरीश्वरः । योगः पशुपतौ चित्तसमाधानम् । विधिर्भस्मना त्रिषवणादिर्निरूपितः दुःखान्तसंज्ञो मोक्षश्च प्रयोजनम् तत एव कार्यकारणयोगविधिदुःखान्ता इति तद्व्याख्यातार आख्यायन्त इति तत्स्वरूपबोधनायोक्तम् । शैवान् पाशुपतान् स्पृष्ट्वा लोकायतिकनास्तिकान् * विकर्मस्थान् द्विजान् शूद्रान् सवासा जलमाविशेदिति मिताक्षरादौ प्रायश्चित्तबोधनाच्च निषिद्धत्वमवगम्यते । चतुर्थस्कन्धस्थोपाख्यानाच्च । अन्यो वा कश्चिदेवञ्जातीयः । एवं स्वरूपमुक्त्वा फलादिकं वदिष्यन्त आहुः ॥ तद्गुणेत्यादि ॥ उमापतिर्भूतपतिः श्रीकण्ठो ब्रह्मणः सुतः * उक्तवानिदमव्यग्रो ज्ञानं पाशुपतं शिव इति मोक्षधर्मवाक्यादिभिस्तस्य मो-

क्षमारोगतत्प्रतिपादनानुकारीत्या सापायत्वाच्च तस्य निषिद्धत्वपरं बोधितम् ॥ शाक्तो मार्ग इत्यादि ॥ अन्येषां शिवोक्तानां स्वरूपं बोधयितुमाहेत्यर्थः । ग्रन्थ इति ॥ संग्रह इत्यर्थः ॥ अत्रे स्पष्टम् ॥ प्रकृतिपदस्यात्र विवक्षितमर्थं स्फुटीकुर्वन्ति ॥ त्रिपुरसुन्दरीत्यादि ॥ मूले, सुदय इत्येवं पदच्छेदः . तासां शक्तीनां लोपार्थमित्यर्थः । एतेन फलमुक्तम् ॥ पञ्चप्रेतमध्ये निरूपितावित्ति ॥ ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः ॥ एते पञ्च महाप्रेताः पादमूले व्यवस्थिता इति तत्तन्त्रवाक्ये तथात्वेनोक्तावित्यर्थः । तत्र समाधिमाहुः ॥ नेत्यादि ॥ स्यागमसङ्ग्रहेऽवान्तराणि चतुःषष्टितन्त्राणि प्रतिपाद्यार्थसहितानि लिख्यन्ते । तत्र, महामायाशम्बरतन्त्रम् । अन्यस्मिन् पदार्थे अन्यथा प्रतिभानरूपमायाप्रपञ्चरचनोपायप्रतिपादकमैन्द्रजालिकविद्यारूपम् ।१। योगिनीजालशम्बरतन्त्रम् । योगिनीजालदर्शनोपायप्रतिपादकम् । २ । तत्त्वशम्बरम्, इन्द्रजालविद्याविशेषः पृथिव्यादितत्त्वानामन्यथाऽन्यबोधोपायप्रतिपादकम् । ३ । सिद्धिभैरवतन्त्रम् । ४ । मायिकभैरवतन्त्रम् ।५। कङ्कालभैरवतन्त्रम् । ६ । कालाग्निभैरवतन्त्रम् । ७ । शक्तिभैरवतन्त्रम् । ८ । योगिभैरवतन्त्रम् । ९ । महाभैरवतन्त्रम् । १० । भैरवनायतन्त्रम्' भैरवाष्टकमिदं कापालिकमतप्रतिपादकम् । ११ । बहुरूपा शक्तिस्तत्प्रतिपादकतन्त्राणां गणो बहुरूपाष्टकम् । यथा, ब्राह्मीतन्त्रम् । १२ । माहेश्वरीतन्त्रम् । १३ । कौमारीतन्त्रम् । १४ । वैष्णवीतन्त्रम् । १५ । वाराहीतन्त्रम् । १६ । इन्द्राणीतन्त्रम् । १७ । चामुण्डातन्त्रम् । १८ शिवदूतीतन्त्रं चेति १९ ॥ यामला नाम सिद्धाख्या तत्प्रतिपादकानि तन्त्राणि रुद्रयामलादीन्यष्टौ । शाक्ततन्त्रतया चतुःषष्टितन्त्राणामपि यामलतया व्यवहारः । २७ । चन्द्रज्ञानतन्त्रम् । कामेश्वर्यादिषोडशनित्याप्रतिपादकम् । तिथिनामधेयं नित्येति कापालिकमतदर्शकं च । २८ । मालिनीतन्त्रम् । समुद्रयानोपायप्रतिपादकम् । २९ । महासंमोहनम् । जाग्रतामपि निद्रोपायप्रतिपादकम् । ३० । वामजुष्टं वामकेश्वरतन्त्रम् । चतुःशतीत्यपि कथ्यते । ३१ । महादेवतन्त्रम् । वटुकादिनिषिद्धकुलाचारप्रदर्शकम् । ३२ । वातुलम् । ३३ । वातुलोत्तरम् । ३४ । कामिकं चेति । श्रीण्येतानि तन्त्राणि क्षेत्रकर्षणादिविधिप्रतिपादकानि । ३५ । हृद्भेदतन्त्रम् । कापालिकाचारप्रदर्शकम् । ३६ । तन्त्रभेद-

शुद्यतन्त्रयोः प्रकाशं रहस्यं वा परकृतमन्त्रतन्त्रप्रयोगाणां पराहृत्युपायाः प्रदर्शिताः । ३७ । ३८ । कलावादं कामशास्त्रं वात्स्यायनादिमतम् । ३९ । कलासारं रूपादिवृद्ध्युपायप्रतिपादकम् । ४० । कुण्डिकामतम् । गुटिकासिद्धिप्रदर्शकम्, गुटिका पानपात्रम् । ४१ । मतोत्तरतन्त्रम् । रससिद्धिप्रकाशकम् । ४२ । वीणातन्त्रम् । वीणा नाम योगिनी । संमोगयक्षिणीत्यस्या नामान्तरम् । तस्याः साधनोपायप्रदर्शकम् । ४३ । त्रोतलतन्त्रं, गुटिकाऽञ्जनपादुकासिद्धिः । ४४ । त्रोतलोत्तरतन्त्रं, चतुःषष्टिसहस्रयोगिनीनां दर्शनोपायः । ४५ । पञ्चाऽमृततन्त्रं, पृथिव्यादिपञ्चभूतानां साधनेन मरणाभावप्रतिपादकं कापालिकतन्त्रम् । ४६ । रूपभेदादिपञ्चतन्त्राण्युच्चाटनादिप्रतिपादकानि ५१ । सर्वज्ञानादितन्त्रपञ्चकं कापालिकसिद्धान्तैकदेशिदिगम्बरमताचारप्रदर्शकम् । ५६ । पूर्वतन्त्रादिदेवीमतपर्यन्तं तन्त्राष्टकं दिगम्बरैकदेशिक्षपणकमताचारप्रदर्शकम् । ६४ । एवमेतानि त्यागार्थं ज्ञेयानि । प्रस्तुतमुच्यते ॥ २७२ ॥ २७३ ॥ २७४ ॥ २७५ ॥ २७६ ॥ २७७ ॥

बौद्धाश्चतुर्विधाः पूर्वमन्तरानन्तमार्गिणः ॥
तेषां बृहस्पतिमुखाः कर्त्तारो हरिरत्र तु ॥
कृष्णसङ्गोपनार्थाय स्वयमेव जगाद ह ॥ २७८ ॥
वेदमार्गविरोधेन येषां करणमण्वपि ॥
ते हि पाषण्डिनो ज्ञेयाः शास्त्रार्थत्वेन वेषिणः ॥ २७९ ॥
सर्वेषां नरके वासस्तमोऽर्वाक्प्रतिपादके ॥
नरकात् पुनरावृत्तौ नानायोनिषु सम्भवः ॥ २८० ॥
आनन्दस्य तिरोभावः सर्वथा दुःखमुच्यते ॥
तस्य स्थानं तु सर्वत्र यमलोको विशेषतः ॥ २८१ ॥
शुद्धं तमो दुःखरूपं सहजासुरसंश्रयम् ॥
सर्वत्र नरकश्चैव तमश्चेति त्रिधा तु तत् ॥ २८२ ॥

सर्वत्र स्वर्गलोकश्च वासुदेवत्रिधा सुखम् ॥
सुखधर्मस्तथेच्छा स्यात् किञ्चिदुद्गम एव सः ॥
सर्वथा ह्युद्गमः कामो धर्मिणस्तु सुखं स्मृतम् ॥२८३॥
द्वेषक्रोधस्तथा दुःखं पूर्ववद् दुःखधर्मतः ॥
लोभोऽतिकिञ्चिदुद्भेदो धर्मयोः सुखदुःखयोः ॥ २८४ ॥
मोहस्तु द्विविधः प्रोक्तो धर्मवत् सुखदुःखयोः ॥
मदे सुखसमुद्भेदो मात्सर्येऽन्यस्य केवलः ॥ २८५ ॥
अन्येषां सर्वधर्माणां लक्ष्मोद्गम एव च ॥
विपाकः कर्मणां येषां प्राग्देहविनिपाततः ॥
प्राप्तस्तानीह भुज्यन्ते ततोऽन्यानि भवान्तरे ॥ २८६ ॥
एते सर्वे विशेषेण जीवसंनिभिमानतः ॥
स्फुरन्त्यन्यस्याभिमानाज्जीवो दुःखी निगद्यते ॥२८७॥
अग्रपश्चाद्भावतश्च कर्मणा स्फुरितो हरिः ॥
अग्रोद्गमानुद्गमनैः सुखदुःखे तनोति हि ॥ २८८ ॥

एवं निषिद्धान् शाक्तानिरूप्य बौद्धान्निरूपयति ॥ बौद्धाश्चतुर्विधा इति ॥ माध्यमिकाः, सौत्रान्तिकाः, विज्ञानवादिनश्चार्वाकाश्चेति । तेषामवान्तरभेदाः कोटिशः सन्ति । तेषां मूलभूतानाह ॥ तेषां बृहस्पतिमुखाः कर्तार इति ॥ लोकायतं शास्त्रं बृहस्पतिना प्रणीतम् । तथान्येऽपि शुक्रमायाविमोहिताः । सांप्रतं हरिरेव बुद्धरूपेणावतीर्णो वेदनिन्दालक्षणं शास्त्रं कृतवान् । अतः सामान्येन पाषण्डमतमाह ॥ वेदमार्गविरोधेनेति ॥ अलौकि-

कर्मेषान् संपाद्य लोकव्यामोहनार्थं तिष्ठन्तीत्यर्थः । तेषां फलमाह ॥ सर्वेषां नरके वास इति ॥ तत्रापि शास्त्रार्थत्वेन निरूप्य मार्गप्रवृत्तिकर्तृणां तम एव । नरके गतानां पुनरावृत्तिः । तमसि प्रविष्टानां न । पुनरावृत्तौ च शूकरादियोनिषु संभवः ॥ २७८ ॥ २७९ ॥ २८० ॥ एवं निषिद्धानां दुःखं फलत्वेन निरूप्य, किं दुःखमित्याकाङ्क्षायामाह ॥ आनन्दस्य तिरोभाव इति । ईषत्तिरोभावे पदार्थान्तरत्वम् । तदग्रे वक्ष्यते । सर्वथा तिरोभावो दुःखम् अनिष्टतिरूपत्वात् ॥ अन्यथा सच्चिदानन्दरूपातिरिक्तपदार्थाभावात् किं दुःखं स्यात् । आत्मनः प्रतिकूलं भगवद्वैमुख्यमेव भवति । ईषत्तिरोभावो दुःखाभावः । सर्वथोद्भवः सुखमिति विवेकः । एवं दुःखसुखे निरूप्य तयोर्देशविशेषे नियतत्वमाह ॥ तस्य स्थानमिति ॥ जगति भगवानीषत्तिरोहितस्तिष्ठति । अतः सर्वत्र दुःखम् । यमलोके सर्वथा तिरोहितः प्राणिनामुपद्रवस्थानत्वात् । अतः सर्वात्मा परमदयालुस्तत्र सुतरां तिरोहितो भवति ।
शुद्धे तमसि तु दैत्यानां निवासात् सर्वथा तिरोभावः । एवं त्रैविध्यमुपपाद्यानुवदति ॥ सर्वत्रेति ॥ सर्वत्र यद् दुःखं नरकश्च तमश्चेति दुःखत्रयम् । सर्वत्र यत्सुखं स्वर्गलोकश्च ब्रह्मानन्दश्चेति सुखत्रयम् । तथा सुखे ऽप्युपपादनम् । इच्छादीनां स्वरूपमाह ॥ सुखधर्म इति ॥ धर्म आकारः । तावन्मात्रप्रकटने इच्छात्वं, तत्रापि किञ्चित्प्राकट्ये इच्छात्वं, बहुप्राकट्ये कामत्वमिति । एवमेव द्वेषादयोऽपि तत्तद् दुःखस्य । लोभस्तु सुखदुःखधर्मयोरुभयोरपि किञ्चिदुद्भेदः । मोहस्तु द्विपत्रवेदकमूलो द्विरूपो धर्मयुक्तः सुखदुःखयोः किञ्चिदुद्भेदरूपः । मदमात्सर्ययोः स्पष्टम् । अधर्माभासे धर्माभासे च तानि फलानीत्येतदर्थं निरूपितानि । कदा भवन्तीत्याकाङ्क्षायामाह ॥ विपाकः कर्मणामिति ॥ अल्पफलानि बहु-

काले पक्वानि भवन्ति । उपचितावयवत्वमेव पाकः । उष्माभि-
घातात् । एवं कर्मणामपि विपाको ज्ञेयः । इदानीमपरिपक्वानि का-
लान्तरे पक्वानि भवन्ति । स्वरूपनाशस्तु प्रायश्चित्तादिनापि भ-
वति । क्रमक्षयस्तु भोगेनैव ॥ २८१ ॥ २८२ ॥ २८३ ॥ २८४ ॥
॥ २८५ ॥ २८६ ॥ अत्र मोक्षारं निरूपयति ॥ एते सर्वे इति ॥
अन्तःकरणधर्मा एते जीवसांनिध्यात् स्फुरिताः । स्वाश्रयावि-
वेकिनम् । अन्तःकरणाविवेकेन प्रवर्तमानं मिलिताः । स्वव्यप-
देशं प्राप्नुवन्तीत्यर्थः । तदा जीवः सुखी दुःखीति वा लोके व्य-
वहारो भवति । नन्वेते आत्मधर्माः कुतो न भवन्ति । अन्तःकरण-
धर्मत्वे वा किं प्रमाणम् । तत्राह ॥ अग्रपश्चाद्भावत इति ॥ कर्मस्व-
रूपो भगवानन्तःकरण एव प्रकटो भवति, नात्मनि । अतः सुखदुःखा-
द्योऽन्तःकरणस्यैव धर्मा इत्युच्यते । स च कर्मात्मा विधिनिषेध-
प्रकारेण स्फुरितः पूर्वोक्तन्यायेन सुखदुःखे तनोति ॥२८७॥२८८॥

बौद्धा निरूपयतीति ॥ त्याज्यत्वायेति शेषः ॥ माध्यमिका इति ॥
शून्यवादप्रस्थाना ॥ सौत्रान्तिका इति ज्ञानाकारानुमेयक्षणिकबाह्या-
र्थवादप्रस्थाना ॥ विज्ञानवादिन इति ॥ क्षणिकविज्ञानमात्रप्रस्था-
नाः । त एव योगाचारा इत्युच्यन्ते । प्रत्यक्षस्वलक्षणक्षणिकबाह्यार्थवा-
दप्रस्थाना वैभाषिकास्ते सर्वार्हता. स्याद्वादिनश्चोच्यन्ते । तेऽप्येष्वेवा-
न्तर्भवन्ति ॥ चार्वाका इति ॥ देहात्मवादप्रस्थाना । त एव लोका-
यतिकाः । देहातिरिक्तदेहपरिमाणात्मवादप्रस्थाना दिगम्बरास्ते चा-
र्वाकस्यैकदेशिन । एवं षड्बाह्यप्रस्थानानि प्रसिद्धत्वाल्लिखितानि ।
एतेषां नामान्युक्त्वा तदप्रामाणिकत्वस्य तत्र लोकप्रवृत्तेश्चोपपादना-
याहुः ॥ तेषामित्यादि. कुलत्वानित्यन्तम् ॥ तथाच मायामोहितकर्तृक-
त्वादप्रमाणाभासत्वम् । कृपि धर्मास्तस्माल्लोकप्रवृत्तिश्चेत्यर्थः ॥ तास
इत्यादि ॥ अतो मोहार्थं मोहितैश्च प्रणीतत्वात् सामान्येन प्रसिद्धाना-
मप्रसिद्धानां च लक्षणतौल्येन पाषण्डत्वमाह एवं प्रसिद्धाँस्त्या-
ज्यत्वाय निरूप्य प्रसिद्धानपि त्याजयितुं पाषण्डिनां लक्षणमभिना-

य तन्मतमाहेत्यर्थः ॥ येदेत्यादि ॥ तथाच विहिततया वेदविरुद्ध-कृतिमत्वं तदभिमतमिति तेन लक्षणेन ते बोध्याः । तत्र दुर्यपास्तु स्यज्यन्त एव, परं ये ईदृशास्तेषां वेपं क्वापि न भ्रमितव्यम् । तत्संसर्गेण विष्णुपुराणप्रसिद्धकृतिरातशतजन्वनोरिव स्वस्यापि तादृक्-फलसंभवादिति भाव ॥ २७८ ॥ २७९ ॥ २८० ॥ किं दुःखमिति ॥ स्पतन्त्रप्रमेयनिरूपणप्रस्तावे दुःखपदार्थस्यानिरूपितत्वात् किं दुःखमित्यर्थः । मूले, सर्वथापदस्य प्रयोजनं न स्फुटमितितद्विवेक्तुमाहुः ॥ ईत्यादित्याह ॥ स्वरूपात्मकस्यानन्दस्यैवपत्तिरोभावे पदार्थान्तरत्वामित्यर्थ. । ननु तर्हि सर्वथा तिरोभावोऽपि पदार्थान्तरमास्त्वित्यत आहु ॥ अन्यथेत्यादि ॥ ननु प्रतिकूलबुद्धिवेद्यत्वस्य तल्लक्षणत्वात्तदतिरिक्तमेवास्त्वित्यत आहुः ॥ आत्मन इत्यादि ॥ तथाचैवमप्यानन्दतिरोभावान्न तदतिरिच्यत इत्यर्थ । एवं दुःखस्वरूपं निरूप्य, घक्ष्यत इतिप्रतिज्ञां पूरयितुमीपत्तिरोभावादेः स्वरूपमाहुः ॥ ईत्यादित्यादि ॥ अयमर्थः । सच्चिदानन्दा द्विविधाः । स्वरूपात्मका धर्मात्मकाश्च । एवं द्विविधा अप्याधिदैविकाध्यात्मिकाधिभौतिकभेदेन त्रिविधा । तत्र स्वरूपात्मकाधिदैविकसच्चिदानन्दरूपो भगवान् पुरुषोत्तमः । आध्यात्मिकतद्रूपमक्षरं द्वितीय । आधिभौतिकतद्रूपं क्षरं प्रथमः पुरुष । धर्मात्मकाधिदैविकसच्चिदानन्दरूपो लीलापरिकरः । तादृशाध्यात्मिकसच्चिदानन्दरूपो वैकुण्ठादिपरिकरः । तादृशाधिभौतिकसदंशात्मकानि अष्टाविंशति तत्त्वानि । तादृशाधिभौतिकचिदंशभूतं तत्त्वनिष्ठं ज्ञानम् । तादृशाधिभौतिकानन्दरूपं तत्त्वनिष्ठं सुखम् । एवमेव यथायथं तत्तिरोभावो ज्ञेयः । एवं सति स्वरूपात्मकस्याधिदैविकाध्यात्मिकानन्दस्यैषत्तिरोभावो दुःखाभावः । स एव मोक्ष इति लौकैरुच्यते । वैदिकसाधनस्य यज्ञादेतदेव फलम् । स्वरूपात्मकस्यानन्दस्यैव सर्वथोद्भव सुखमित्यर्थः । एवं लोकेऽपि धर्मात्मकतत्त्वादिनिष्ठाधिभौतिकानन्दस्यैषत्तिरोभावो लौकिकदुःखाभाव', सर्वथाद्भवो लौकिकसुखमित्यादि बोध्यम् । नन्वेवं सति व्यापका भगवान् सर्वत्रेति सर्वत्र सुखमेव स्यात् । तिरोभावे च दुःखमेव स्यान्न तु द्वन्द्वमित्याकाङ्क्षायामाहुः ॥ एवमित्यादि ॥ तस्य स्थानमिति ॥ स्वरूपानन्दतिरोभावस्य स्थानमित्यर्थः । नन्वेवं सति तिरोभावस्य सुखस्य च परस्परविरोधात् कथं कचिदुभयस्थितिरित्या-

या प्रतिकूलबुद्धिर्वेद्य । अन्ययोराहु ॥ मदमात्सर्ययो स्वरूपमिति ॥ चेत प्रसादो हर्ष । हर्षोत्कर्षो मद । परोत्कर्षासहन मात्सर्यम् । एतयोर्यथायथमनुकूलप्रतिकूलबुद्धिवेद्यत्वात् सुखदु खरूपत्व स्फुटमित्यर्थ । एव कपाञ्चित् स्वरूप निरूप्यानुक्ताना सग्रहार्थं मूल माहु ॥ अन्येषामित्यादि । अन्यषा रागभयह्रीप्रभृतीना सर्वमनोधर्माणां यथासभव सुखदु खोद्गम एव स्वरूप ज्ञेयमित्यर्थ । तथाच सुलभा सुखपूर्वावस्था राग । तादृशी दु खावस्था भयम् । तथा अकर्मजुगुप्सा दु खधर्मस्यातिसूक्ष्माङ्कुररूपा ह्रीरित्येव ज्ञेयम् । उत्साहस्तु निश्चयविशेष । धृतिस्तु जिह्वापस्थजय । विषयाभिलापोपमर्दिका मानसी क्रिया विपरीता अधृति । यत्तोऽपि यदाकदाचिदनुकूलमानसक्रियैवेति तु प्रसङ्गादुक्तम् । एवमन्यदप्यूह्यम् । एवमेतेषा स्वरूपमुक्त्वा एतदुद्गम हेतू आहु ॥ अधर्माभासेत्यादि ॥ तथाच सुखदु खया प्रतिनियतन्यूनाधिकभावो धर्माधर्मतत्तदाभासै कृत इत्यर्थ । यद्यपि ज्योति शास्त्रे, परिणामानिफलोक्ति स्वप्नचिन्तास्वकीयैरिति निर्दिष्टत्वग्रहे सुखादिकमुक्त तथापि तेषा सूचकत्वादि यथस्थापनाद्भिक्षुगीताया ग्रहनिमित्ततादूषणाच्च पूर्वोक्त एव निश्चय इति ज्ञेयम् । ननु यदि धर्माधर्माभ्यामेव सुखदु खे तर्हि तदव्यवहितोत्तरमेव त स्याता न तु विलम्ब्य। कर्मणस्त्रिक्षणावस्थायित्वेन चिरम्य व्यापारस्याशक्यवचनत्वात् । अथापूर्वेणाव्यवहा तत् भवतीत्युच्यते कस्तर्हि तदुद्गम समया यदैत भवन्तीति हृदि कृत्वाऽऽहु ॥ कदेत्यादि ॥ ननु कर्मणा तौल्यात् कथ केषाञ्चिदत्र विपाकोऽन्येषा जन्मान्तर इत्याकाङ्क्षाया तेषा तारतम्य स्फुटीकुर्वन्ति ॥ अल्पफलत्यादि ॥ तथाच महाफलान्यत्र पच्यन्त इत्यस्मिन्नेव तत्फलं भुज्यत इतराणि परत्रेत्येव ज्ञेयम् । अत्युग्रपुण्यपापानामिहैव फलमश्नुत इत्यादिवाक्यश्च इ यथ । एव कर्मणा स्वभावो बोधित काऽत्र पाक इत्यतो विवक्षितपाकपदार्थं विवृण्वन्ति ॥ उपचितेत्यादि ॥ ऊष्माभिवर्धन सजातीयसवलन उपचितावयवत्वमेव पाक । रूपरसादिविपर्यासरूपकार्यं च फलादौ तदुद्गमकम् । एव पाकपदार्थं निश्चित्य तिद्दिशन्ति ॥ एतामित्यादि ॥ त्रिक्षणावस्थायित्वपक्षेऽप्यपूर्वसमुदायस्त्वादृशत्वत्र याग्य एव । अन्यथा परमापूर्वस्यैवासिद्ध । किञ्चैव जातेऽपि परमापूर्वे तदानीं फलाभावात् कालादेर्देशसामान्या-

च सहकारिताऽपि वाच्या । तदीय फलसिद्धौ स एव पाकपदार्थः । अस्माकं तु कर्मस्वरूपस्य भगवतः सार्वदिककार्यावेन पुंसा विहितेन स्वकर्मणाऽन्यदीयेन वा कर्मणा यादृशोऽभिव्यञ्जयितुमारब्धस्तं प्रति तादृशैः कर्मान्तरैः स पूर्णो यदाभिव्यक्तो भवति तदा पूर्णतया भोगयोग्यो भवति । तथा सति तदवयवभूतानां कर्मणां यथोचितावयवत्वे कराङ्गुल्यादीनां स्थूलत्वाऽधिकाभिव्यक्तता पोषः । स एव विपाकपदार्थो ज्ञेय इत्यर्थः । तेन सिद्धमाहुः ॥ इदानीमित्यादि ॥ तथाच यानि सूक्ष्माण्यभिव्यक्तानि तानि वेदवेद्यानि तदानीमविपक्वानि कालान्तर उक्तरीत्या पुष्टानि फलन्तीति तारतम्यादस्त्यर्थ कालभेद इत्यर्थः । ननु यद्येवं कर्मणामवश्यफलत्वं तदा प्रायश्चित्तादिशास्त्रवैयर्थ्यापात इत्यत आहुः ॥ स्वरूपनाश इत्यादि ॥ आदिपदेन कीर्तनादेः संग्रहः । धर्मः क्षरति कीर्तनादिति । स्वरूपनाशः फलाऽनुकूलाकारनाशः । कर्मक्षयस्तु तत्स्वरूपनिरोभावः । भोगेनेत्युपलक्षणम् । तथाच, कर्मणा कर्मनिर्हारो न ह्यात्यन्तिक इष्यते * अविद्वदधिकारित्वात् प्रायश्चित्तं विमर्शनम् । केचित् केवलया भक्त्या वासुदेवपरायणाः । अघं धुन्वन्ति कार्त्स्न्येन नीहारमिव भास्करः । ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुते तथेत्यादिषष्ठस्कन्धगीतादिवाक्यैरेतद्व्यतिरेकेण कर्मक्षय इत्यर्थः ॥ २८१ ॥ २८२ ॥ २८३ ॥ २८४ ॥ २८५ ॥ २८६ ॥ * ॥ अत्र भोक्तारमित्यादि ॥ एवं कर्मणां फलं तद्भोगावसरादिकं भोक्ता भोग कस्येत्याकाङ्क्षां पूरयितुं सुखादिधर्मिणं च निर्धारयितुं तत्फलभोक्तारं निरूपयतीत्यर्थः ॥ मिलिताः स्वव्यपदेशं प्राप्नुवन्तीत्यर्थं इति ॥ स्वपदमात्मीयार्थकम् । तथाच उक्तविधे संसारिणं जीवं प्राप्ताः सन्तः स्वयं जीवधर्मत्वव्यपदेशं लभन्तीति यावत् । अत्र वैशेषिकमतेन द्विधा शङ्कन्ते ॥ नन्वित्यादि ॥ समाधत्ते ॥ अप्रेत्य हि ॥ उभयथोपपत्तिमाहुः ॥ कर्मेत्यादि ॥ अयमर्थः । कर्मणः कार्यं जन्मेति स्वभावस्य कार्यं परिणाम इति द्वितीयस्कन्धे स्थितम् । तथाच कर्म यत्रैव प्रकटीभवति तत्रैव जनयति तत्रान्तःकरणं प्रकटः सुखादिकं जनयति, तदा स्वभावेनान्तःकरणं परिणमते तस्मात्तथोच्यते । अत एव कर्मफलभोगे लिङ्गापेक्षा । आत्मधर्मत्वे अशरीरस्यापि प्रियाप्रियं स्पृशेताम् । तथाच, अशरीरं वा व सन्तं प्रियाप्रिये न स्पृशत इतिश्रुतिर्विरुध्येत । अतो मनोमात्रधर्म-

लिङ्गशरीरान्वयव्यतिरेकानुविधानादन्तःकरणस्यैवेते धर्मा इत्यर्थः । मन्वन्तःकरणे प्रकटश्चेत् स्यात्तदानुभूयेतेतिचेत् तत्राहुः ॥ म चेत्यादि ॥ तथाचैवंस्फुरणरूप एव तस्य प्रकटीभावो, न तु विशेषाकारेण वृत्तिगोचरः स इत्यर्थः । न च कर्मणां परिणामित्यादावविरुच्यादमङ्गलमिति भगवतापि दुःखस्वरूपः कर्मणां परिणाम उक्त इति तद्विरोध इति शङ्क्या । कर्मणां पूर्वोक्तरीत्या विपाकात्मपरिणामशालित्वाद्वित्रिपर्यन्तममङ्गलं दुःखमन्तःकरणे भवतीत्यर्थात् । अत एव द्वितीये, यथेत्तनाद्यरूपयानिदंविदामिति चित्ततो दुःखमुक्तम् ॥ २८७॥२८८॥ इति फलप्रकरणम् ॥

एवं फलप्रकरणे ज्ञानसमुचितात् कर्मणो मोक्षः फलं, योगसांख्यभक्तीनां मेलनेऽपि मोक्षः । केवलयोगसांख्ययोरविद्यानिवृत्तिधर्मेहीनयोस्तयोरन्येषां च नरकः फलम् । भ्रान्तप्रतिपन्ने धूमादिमार्गे धर्मरूपं भौतिकं सुखं तत्तिरोभावरूपं दुःखं च द्विविधकर्मणां फलम् । तथैवोपासनायां सुखं प्रकीर्णकानां प्रवाहप्रभवशो भगवदीययोगसांख्यकर्माधेण ना कालविलम्बेन भक्तिः, कापालिकयोगविपाके मोक्षोऽन्यथा नरकादि, नानाविधशाक्तादीनां नरक इत्येवं सर्वेषां फलनिरूपणेन वैदिकमुख्यमार्गभगवदुक्तभक्तिमार्गातिरिक्तानां जघन्यता फलतः प्रतिपादिता । अतः परं ज्ञानभक्त्योर्मध्ये एकतरस्याधिक्यं वा द्वयोः साम्यं वेति विचारणीयम् । तथा, पश्चाद्धस्ये तयोर्गतिमिति प्रतिज्ञातत्वात् पूर्वमीमांसानिर्णयो, वर्णाश्रमवतां धर्म इत्यादिना कृत इत्युत्तरमीमांसानिर्णयः शिष्टत्वात् करणीयः । तथा, ज्ञानेऽपि सात्त्विकी मुक्तिरिति, तत्त्वमस्यादिवाक्यस्येत्यारभ्य, भजनं सर्वथा मतमित्यन्तं पूर्वप्रकरणोक्तं च विमर्षणीयमिति पूर्वोक्ते प्रमाणादिप्रकरणत्रये सर्वेषां प्रमेयाणां बलमपि विचारितमतः परं सर्वनिर्णयोऽवसरतः प्राप्त इति तदर्थं साधनप्रकरणमारभन्ते ।

एवं फलं निरूप्य साधनं निरूपयितुं भगवत्प्राप्तौ किं साधनमित्याकाङ्क्षायां ज्ञानं साधनमिति लोकप्रसिद्ध्या प्राप्तं ज्ञानं वेदविचारेण, तमेव विदित्वाऽतिमृत्युमेतीति दुःखाऽतिक्रममेव फलत्वेन मन्यते । परमानन्दानुभवस्तु भक्त्येत्यग्रे वक्ष्यते । एतदेव साधनद्वयं तारतम्येन यथा फलं निरूपयति तथोच्यते । तत्र ज्ञानं

दुःखं दूरीकरोति निश्चितम् । तद्धाऽऽपातत एव दूरीकरोति, मूलतस्तु भक्तिरेवैतदपि करोति । अनर्थोपशमं साक्षाद्विद्याश्रयात । अतो ज्ञाने परम्परया दुःखदूरीकरणं वक्तव्यम् । तथया गताज्ञ्या भवति तामाह ।

ज्ञाने यर्हि मनोराज्यं शोकस्तेनापि नो भवेत् ॥
त्रिविधं दुःखमेतद्धि भवत्येव न संशयः ॥
सर्वाध्यासनिवृत्तौ हि सर्वथा न भवेद्यथा ॥ २८९ ॥
सा च विद्योदये सा च न शब्दात् सुविचारितात् ॥
मर्यादाभङ्ग एव स्यात् प्रमाणानां तथा सति ॥२९०॥
गजानुमानं नैवं स्यात् साङ्कर्यं वा तथा भवेत् ॥
दशमस्त्वमसीत्यादौ देहादिविषयत्वतः ॥ २९१ ॥
शब्दस्य साहचर्येण चक्षुषैव भवेन्मतिः ॥
स्मारकत्वमतो वाक्ये संख्याज्ञानं पुरा यतः ॥ २९२ ॥
अध्यासस्यानिवृत्तत्वान्न विविक्तात्मदर्शनम् ॥
मनसा शक्यते कर्तुं नान्यथा सर्वदा भवेत् ॥२९३॥
प्रत्यक्षेणापि विज्ञानं मायया ज्ञानकारया ॥
स्वप्नप्रबोधरीत्या हि किमु शाब्दं निवारयेत् ॥२९४॥
सर्वज्ञत्वं सर्वभावज्ञानं चापाततः फलम् ॥
सर्वो न ब्रह्म सर्वं तु वामदेवस्तथा जगौ ॥२९५॥
अवधुत्या गर्भवासी सूर्याद्यनुवदन्मुहुः ॥
ज्ञानदुर्बलवाक्यत्वात् पाषण्डवचनं मतम् ॥

सत्ये युगेऽतिमहतां भवत्येतन्न चान्यथा ॥ २९६ ॥
स्वप्नो जागरणं चैव यथा ह्यन्यांन्यवैरिणौ ॥
विद्याविद्ये तथा स्यातां न तु सर्वात्मना लयः ॥२९७॥
इदमेव विनिश्चित्य कृष्णो ह्यर्ज्जुनमब्रवीत् ॥
मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते ॥
एवकारेण सर्वेषामनुपायत्वमाह हि ॥ २९८ ॥

ज्ञाने यदीति ॥ ज्ञानस्वरूपं शब्दाच्छ्रुतं मनसा मनोराज्यव-द्यदा भावयति । तदापि शोको निवर्त्तते ।
अतो यादृशेनापि तादृशेन ज्ञानेन लोके जायमाना अन्तःकरण-क्लेशा निवर्त्तन्ते, व्याध्यादिकस्तु न निवर्त्तते। तथा नरकदुःखम् । सहजासुराणां तमोदुःखं च । तदाह विविधमिति ॥ तस्यापि नि-वृत्त्युपायमाह ॥ सर्वाध्यासनिवृत्तौ हीति ॥ व्यथा पीडा । सर्वाध्या-सनिवर्त्तकं तु ज्ञानं नेदानीन्तनानां, नेदानीन्तनशास्त्रानुसारेणेति निरूपयति ॥ सा चेति ॥ अविद्यानिवृत्तिर्विद्योदये, विद्या च शा-ब्दाच्च जायते । सङ्घातस्थितो ह्यात्मा सदानुभूयते । श्रुतिः पुनः सङ्घातव्यतिरिक्ततां बोधयन्ती अननुभूतब्रह्मात्मभावं वा बोधय-न्ती पूर्वज्ञानेन बाधिता दुर्बला भवति । अतो वैराग्यादिसाधनैः सहिता मनननिदिध्यासनाभ्यां युक्ता अभ्यासेन बलिष्ठा मन-सि ब्रह्माहमस्मीति वृत्तिमुत्पादयति । तदाऽनुभवपरम्परया पूर्वा-नुभवो बाध्यते । तत्र शब्दस्य सहकारित्वं, मननसाहाय्यस्य कर-णत्वम् । ये तु पुनः शब्दस्य करणत्वमाहुस्ते भ्रान्ता एव । न ह्यात्मविषयकेषु ज्ञानेषु मनोऽतिरिक्तं करणं भवति । बहिरिन्द्रि-याणां ग्राहकाणां बहिर्विषय एव सामर्थ्यात् । अत आत्मनो धर्मो

प्रमात्वलक्षणो, न बाध्यः । दशमस्त्वादिवत् । स च देहधर्मो देहेष्वेवापेक्षाबुद्ध्या जन्यते । अतो दशमोऽहमिति देहरूपमात्मानं शब्दाज्जानतोऽपि न ब्रह्मरूपानुभवस्तदेति सिद्धान्तः । किञ्च दशमोऽहमिति चाक्षुषज्ञानं शब्दे युष्मच्छब्दप्रयोगात् । न हि शब्दः पदस्मारितपदार्थोल्लङ्घनेन वाक्यार्थं जनयति । अतो युष्मच्छब्देनास्मच्छब्दज्ञानं जनयिष्यति । तथा जायमानं चक्षुषा मनसा वा न मने इत्यङ्गीकर्तव्यमित्याह ॥ न शब्दात् सुविचारितादिति ॥ दूषणान्तराण्याह ॥ मर्यादाभङ्ग एव स्यादिति ॥ ज्ञानं तु प्रमाणाधीनं, न प्रमेयाधीनम् । मानाधीना मेयसिद्धिरिति । अन्यथा लोके मर्यादाभङ्गः स्यात् । तं घटमानयेत्यत्र वाक्यार्थज्ञानं प्रत्यक्षं स्यात् । चीत्कारेण गजानुमानं च न स्यात् । प्रत्यक्षत्वं जातिः, परोक्षत्वं च ज्ञानम् । तयोरप्यनुभवात् । अतः साङ्कर्यं च भवेत् । दशमवाक्यमन्यथासिद्धमिति । भ्रान्तानां मतेन दृष्टान्त इत्याह ॥ दशमस्त्वमसीति ॥ दशमोऽहमिति देहाभिन्नज्ञानं, प्रकृते तदभावमाह ॥ अध्यासस्येति ॥ प्रतिबन्धानिवृत्त्यनन्तरमेव हि कार्योदयः । अतोऽध्यासस्य प्रतिबन्धकत्वान्न शब्दात्प्रज्ञानमभ्युदेतीति भावः । अत एव महता साधनेन तज्जन्यते ॥ अतः शब्दसाहचर्येण मनसापि तज्जनयितुं शक्यं नेत्यर्थः ॥ विपरीते बाधकमाह ॥ अन्यथेति ॥ शब्दश्रवणमात्रेणैव तज्ज्ञाने जाते सर्वसाधनवैयर्थ्यमिति ॥ २८९ ॥ २९० ॥ २९१ ॥ २९२ ॥ ॥ २९३ ॥ गुरुज्ञानेनाऽप्यध्यासानिवृत्तिर्नास्तीत्याह ॥ प्रत्यक्षेणापीति ॥ स्वप्नप्रबोधो यथा न निद्राव्यावर्तकस्तथा जीवमलयसाधनो न कदाप्यविद्यानिवर्तकः । मायाधीनत्वात्तेषाम् । यथा सा नानाऽवस्थाः संपादयति तथा ज्ञानावस्थामपि सम्पादयतीति येन मायानिर्मिता सैवाध्यासं निवर्तयति, नान्येत्यर्थः ।

ज्ञानिनामपि चेतामीत्यादिवाक्यानि च बाधकानि । किञ्च, जीवस्यात्मनो ब्रह्मत्वेन ज्ञानं ब्रह्मस्वरूपज्ञानानन्तरमेव । अन्यथा रजतज्ञानरहितस्यापि शुक्तिकायां रजतभ्रमो भवेत् । अतः पूर्वं ब्रह्मज्ञानमपेक्षितं, तेनैव कार्यसिद्धावात्मज्ञानं व्यर्थम् । अपरोक्षत्वाय तथात्वेऽप्येकदेश एव तथा भानमनर्थमेव निवारयेत्, न फलं साधयेदिति । ब्रह्मज्ञानं पूर्वं जातं निष्फलं भवेत् । सर्वज्ञत्वं च तस्य लक्षणम् । तत्रापि केचिन्मन्दमतय आत्मज्ञानमेव सर्वज्ञानमिति वदन्ति । तन्निराकरोति ॥ सर्वो न ब्रह्मेति ॥ तु पुनः सर्वमेव सर्वशब्देनोच्यते । यतो वामदेवः अगर्भस्थितो ह्यहं मनुरभवं सूर्यश्चेति सर्वशब्दार्थरूपान्मन्वादीननुवदति । अतस्तथा चकारो ज्ञानदुर्बलत्वादिन इति मन्तव्याः । ज्ञानस्य दुर्लभत्वमाह ॥ सत्ये युग इति ॥ भक्त्युत्कर्षार्थमाह ॥ स्वप्न इति ॥ प्रमाणमाह ॥ इदमेवेति ॥ ज्ञानी त्वात्मैव मे मत इति ज्ञानप्रशंसावाक्यं भक्त्युत्कर्षार्थमेव । तपस्विभ्योऽधिको योगीत्यत्र तथा निरूपणात् । न तथा मे प्रियतम इत्यत्र स्पष्टमेवात्मनोऽपि माहात्म्यं भक्तस्य । अन्यथा मुख्यत्वेन ज्ञानानन्तरं भक्तिं न वदेत् । तदाह ॥ एवकारेण सर्वैव मिति ॥ २२४ ॥ २२५ ॥ २२६ ॥ २२७ ॥ २२८ ॥

एवं फले निरूप्येत्यादि ॥ फलान्तरस्य जघन्यताप्रतिपादनद्वारा भगवत्प्राप्तिरूपं फलं मुख्यत्वेन प्रतिपाद्य तत्र साधनं भक्तिरूपं निश्चाययितुं भगवत्प्राप्तौ किं साधनं, योगास्त्रयो मयेति भगवद्वाक्योक्तेषु सभेदेषु त्रिषु लोकप्रसिद्धेष्वन्येषु च साधनेषु किं मुख्यसाधनमित्याकाङ्क्षायां, ज्ञानादेव हि कैवल्यमिति श्रुत्या ज्ञानं साधनमिति हेतोर्लोकप्रसिद्ध्या प्राप्तं ज्ञानं, षोडशपदार्थतत्त्वज्ञानान्मोक्षः, द्रव्यादिषट्पदार्थसाधर्म्यवैधर्म्यज्ञानान्मोक्षः, प्रकृतिप्राकृतविविक्ताऽऽत्मज्ञानान्मोक्षः, ब्रह्मत्वेनाऽऽत्मज्ञानान्मोक्षः, ब्रह्मज्ञानान्मोक्ष इत्यादिरूपेण तेषु तेषु तन्त्रेषु प्रस्थानेषु च प्राप्तं ज्ञानं वेदविचारेण वेदे आत्मज्ञानाद् ब्रह्मज्ञानाच्च मोक्षस्योक्तत्वात्मतान्तरनिरासपूर्वकतद्वि-

ध्यानेन, तमेव विदित्वा अतिमृत्युमेतीति श्रुतावपि नान्तो मृत्युम् अ-
तिमृत्युरिति योगकालिमृत्युपदेन दुःखात्मकमस्यैवोक्तत्वादिदं या-
वर्णाकं ध्यानं दुःखात्मिकमेव फलत्वेन मन्यते । षड्दुःखस्य षडि-
न्द्रियाणि षड्विषयाः सुखं दुःखं शरीरं चेत्येकविंशतिदुःखध्वंसस्य,
अशेषविशेषगुणोच्छेदः आधिदैविकादित्रिविधदुःखात्यन्तनिवृत्तेः
शोकतरणस्य च तेषु तेषु तन्त्रेषु प्रस्थानेषु च प्रतिपादनाद् दुःखा-
त्यन्ताभावमेव विषयीकरोति । न च नित्यनिरतिशयसुखाभिव्यक्ति-
र्मोक्षः । अविद्यानिवृत्तौ स्वप्रकाशाखण्डानन्दस्वरूपस्यात्मनः स्वरू-
पेणावस्थानं मोक्षः । अखण्डानन्दरूपे परमात्मनि जीवात्मनो लयो
मोक्ष इत्यपि बहुभिरङ्गीकृतं । स चानन्दानुभवो ध्यानेनैव भवतीति
कथं दुःखाभाव एव फलमिति वाच्यम् । यतः परमानन्दानुभवो
भक्तावेवाग्रे वक्ष्यते, इदं चैकं दुःखाभावसाधकमेकं परमानन्दानु-
भवसाधकमुभयमनुभवसाधकमस्यादिविचारे यथा यतस्यैव सं-
धानद्वयस्य यथा फलद्वयं तथैवात्र इत्यर्थः ॥ निश्चितमिति ॥
ज्ञाने सति तु दुःखाभावानुभवस्यानुभवसाक्षिकत्वान्निश्चितम् । तथापि
विशेषः ॥ तद्यथा इत्यादि ॥ दूरीकरणे आपाततोऽनुभवः विषय-
स्वनिवृत्तिः ॥ इति वाक्यात् = साक्षात्परम्परयोरिवान्वयात् ॥

अत इति ॥ ज्ञानवाक्यं साक्षात्परम्परयोर्नर्थं तत्र दुःखात्यन्ताभा-
वस्य साक्षादनुभवाद्वस्थानात् ॥ तत्राह इति ॥ ज्ञाने यद्वेत्यादिसार्ध-
कान्तमित्यन्तस्य व्याख्यानमित्यर्थः ॥ ज्ञानस्य रूपमित्यादि ॥ अयमर्थः ।
दुःखध्वंसं प्रति या ज्ञानस्य कारणता सा केन रूपेणेति विचारणी-
यम् । न तावद्ध्यानत्वेन रूपेण । शोकमात्रेणापि शोकनिवृत्त्यापत्तेः ।
नापि यथाकथञ्चिज्ज्ञानविषयत्वेन रूपेण । नैयायिकादिशास्त्रज्ञानेन
दुःखध्वंसस्य उदाहरणाभावात् । किन्तु श्रुतिनिरूपितत्वेन श्रुत्यभिम-
तरूपाकारविषयत्वेन वा रूपेण ज्ञानस्य तथात्वम् । तदपि स्वरूपमाहात्म्येन त-
थामेव फलसाधकम् । अत एव तु न तथा । किन्तु यत्किञ्चिदेव
शोको निवर्तेत इति । ननु तरति शोकमात्मविदिति श्रुतौ शोक-
निवृत्तेरेव फलत्वेन श्रवणात्कथमत्र विशिष्टोक्तिरिति चेत् तत्राहुः ॥ भल
इत्यादि ॥ अत इति न ज्ञात् । तथात्र समाप्तानिष्टस्य दुःखा-
भावस्य साधकत्वस्य तत्र तादृशरूपाविश्वासादप्यायनया शोकनिवृत्तिः
पुनर्भवनस्य च दृष्टान्ताच तेन यावच्छोककारणमतः सर्वदु खानिवृ-

सेराद्यर्थे तत्प्रयोजकमेव, किन्त्वनाद्यर्थमेव तद् यावद्दुःखध्वंसाया-ऽपेक्षितमित्यर्थं ॥ रथाश्वादीरव दि ॥ अत एव रथिकस्य पामा । सो-ऽधस्ताच्छकटस्य पामानं कपमाण इति श्रुतेः । एवमन्यत्रापि ज्ञेयम् तत्रैतत्राहेत्यर्थः ॥ सर्वाभ्यासनिवर्त्तनमित्यादि ॥ तर्हि तादृशज्ञानार्थं यतनीयमित्याकाङ्क्षायामुक्तरीत्या तत्प्रसिद्धिं निरूपयतीत्यर्थः ॥ शब्दात् कुतो न जायत इत्याकाङ्क्षायां तत्र शब्दस्य केवलस्य सह-कारिसंपन्नस्य चाकारणत्वं व्युत्पादयन्ति ॥ संघातेत्यादि ॥ दुर्बला भवतीति ॥ तथाच केवलः शब्दो न कारणमित्यर्थं । तर्हि सहका-रिसंपन्न सुविचारित कारणमस्त्विति चेत्तत्राहुः ॥ अत इत्यादि ॥ तादृशस्यापि ॥ शब्दसहकृतस्य वैराग्यादिसंपन्नस्य । अत उभय-थापि शब्दस्य न ब्रह्मसाक्षात्कारकरणत्वमित्यर्थं । ननु दशमस्त्व-मसीत्यादिलौकिकवाक्यदृष्टान्तेन शब्दस्य साक्षात्कारकरणत्वं सिद्धा-न्तमुक्तावल्यां पञ्चदशप्रकरण्यां च विद्यारण्यादिभिर्व्युत्पादितमस्ती-ति कथमकरणत्वमुच्यत इति चेत्तत्राहु ॥ ये तु पुनरित्यादि ॥ कथं भ्रान्ता इत्याकाङ्क्षायां दृष्टान्तवैषम्येण तेषां तथात्वं व्युत्पादयन्तस्त-दुक्तमभ्युपगम्य दूषयन्ति ॥ न हीत्यादि ॥ दशमत्वादिवदिति ॥ वै-धर्म्ये दृष्टान्त. ॥ ब्रह्मरूपानुभव इति ॥ ब्रह्माकारवृत्तिरूपोऽनुभवो यस्य तादृशो न । अयमर्थः । दशमस्त्वमसीति वाक्यदृष्टान्तेन यः शा-ब्दाद् ब्रह्मत्वेनात्मसाक्षात्कार आपाद्यते स न संभवति । दशमत्वस्य बाह्यत्वेन शब्दतो घटादेरिव तद्विषयज्ञानस्यापि संभवयुक्तिक-त्वात् । ब्रह्मत्वस्य त्वान्तरत्वेन तद्ग्रहणे मनोऽतिरिक्तानां निकटवर्ति-नामिन्द्रियाणामप्यसामर्थ्यमिति बहिरिन्द्रियग्राह्यस्य शब्दस्य कुत-स्तरां सामर्थ्यं स्यादिति तस्य सुदूरनिरस्तत्वात् । अथात्मनिष्ठमा-न्तरमेव दशमत्वं शब्दाद्भासत इत्युच्यते, तदप्यसंगतमेव । दशम-त्वस्यापेक्षाबुद्धिजन्यत्वात्तस्यां संख्याघटकानां सजातीयानामात्मनां चाव्ययस्य विपर्ययाभावस्यैव ग्राहकाभावेन दौर्घट्यात् । परात्मनां प-रेणाग्रहणात् । अतो नवत्वादिवद्दशमत्वमपि तया जनितं बाह्यमे-व संस्थास्यतीति तस्यान्तरत्वासिद्धेः । कृशोऽहमितिवद्दशमोऽहमिति प्रत्ययस्यापि देहस्यैव वेद्यत्वाच्च । अत एवमुपगमेऽपि दृष्टान्तवै-षम्यात्साभीष्टसिद्धि । तदेतदुक्तम्—इति सिद्धान्त इति ॥ अथानभ्युप-गम्य दूषयन्ति ॥ किञ्चेत्यादि ॥ अस्मच्छब्दज्ञानमिति ॥ अस्मच्छब्दस्मा-

रिवार्थेज्ञानम् । ननु यथा ज्ञानवर्गीन प्रत्यक्षबाधितमिदं दूषणमकि-
ञ्चित्करमित्याकाङ्क्षायां तदभावपरिहाराय कार्यस्यान्यथासिद्धत्वमा-
हुः ॥ तथेत्यादि ॥ एवमनेन संदर्भेण– केवलस्य शब्दस्य करणत्वं,
यान्तो दान्तः मन्तव्य इत्यादिश्रुतिविरोधः, सहकारित्वादन्यथाकरण-
त्वम्, असामर्थ्यं, दृष्टान्तवैषम्यं, पदस्मारितपदार्थोल्लङ्घनं चेति षड्
दूषणान्युक्तानि ॥ मर्यादाभङ्ग इति ॥ अथ शब्दात्परोक्षं सत्यपत्र प्र-
त्यक्षाच्छाब्दमेवमन्यस्मादप्यन्यत् स्यादित्यर्थः । यथेदं ज्ञानं शाब्द-
सहकृताद्विषयादेव जायते इत्यङ्गीक्रियते तदाप्यसंगतमित्याहु ॥
ज्ञाने इत्यादि ॥ प्रमेयाधीनत्वे चाक्षुषं शाब्दमनुमितिरिति करणमि-
त्यवस्था या ज्ञाने व्यवहारमर्यादा सा भज्येतेत्यर्थः । भङ्गमप्यङ्गीकृ-
त्य तथाङ्गीकारे शब्दान्तरात् प्रत्यक्षे स्यादनुमितिश्च न स्यादित्या-
हुः ॥ तमिति ॥ चीत्कारेति च ॥ दूषणान्तरमाहुः ॥ प्रत्यक्षत्वमित्या-
दि ॥ इन्द्रियकार्यतावच्छेदकतयाऽनुमानादिकार्यतावच्छेदकतया च
सिद्धे प्रत्यक्षत्वपरोक्षत्वे जाती इदं ज्ञानं प्रत्यक्षत्वेनेदं परोक्षत्वेन
जातमित्यनुव्यवसायादनुभवगोचरे नापह्नोतुं शक्ये । एवं सत्यपि
यदा दशमवाक्यात् प्रत्यक्षमङ्गीक्रियते तदा सांकर्यात्तयोर्जातित्वाप-
ह्नवप्रसङ्गः । यत्र प्रत्यक्षत्वाभावोऽनुमित्यादौ तत्र परोक्षत्वम् । य-
त्र परोक्षत्वाभावो घटादिसाक्षात्कारे तत्र प्रत्यक्षत्वम् । उभयसमावे-
शो दशमस्त्वमिति वाक्यजन्ये ज्ञानापरोक्षे इति सांकर्यमतस्तदप्र-
योजकमित्यर्थः । एतावता ग्रन्थेन, तत्त्वमस्यादिवाक्यस्य शोधितस्या-
पि युक्तितः * न विद्याजनने शक्तिरिति पूर्वोक्तं विचारितम् । तेन,
अन्यापि तत्र कल्पितमित्यन्यार्थत्वं यदुक्तं तदु दृढीकृतम् । अत पर-
म्, अलौकिकं तत्प्रमेयमित्यादिकं विभूषयन्ति ॥ दशमवाक्यमित्यादि ॥
तथाच मास्तु तयोर्जातित्वं, धर्मत्वेनैव तयोरनुभवेन जातित्वानव-
गाहनात् । तथा सति भवतु सांकर्यं, को दोष इत्याकाङ्क्षायां दृष्टान्त-
स्यासंगतत्वमाहुरित्यर्थः । मूलग्रन्थस्य अनिषड्त्स्य व्याख्यानं. दशमोऽह-
मित्यादि ॥ तथात्र सांकर्यं यदाङ्गीकार्यं स्यात्तदा केवलाद्दशमवाक्या-
दुक्तविधप्रत्यक्षं निर्णीयेत । तदेव तु दुर्घटम् । दशसंख्याज्ञानस्य
पूर्वं सत्त्वाद्विस्मृते संख्याघटके शब्देन तत्स्मारणाद्वाक्यस्य स्मारक-
त्वमेव तत्सहकृतस्य चक्षुष एव करणत्वमतो दशमवाक्यं स्मरणे
गृहीतकारणताकत्वादन्यथासिद्धमिति व्यर्थं सांकर्याद्यङ्गीकारप्रया-

सेन भ्रान्तानां दृष्टान्तसमर्थनमित्यर्थः ॥ प्रकृत इत्यादि ॥ ननु मा-स्तु शब्दात् प्रत्यक्षं, तथापि दशमवाक्यसहकृतचक्षुषेव तत्त्वमस्या-दिवाक्यसहकृतमनसैव विविक्तात्मदर्शनमस्तु, को दोष इत्याका-ङ्क्षायां प्रतिबन्धकाभावादिमर्पोत्याहेत्यर्थः । अथ नव्यनैयायिकव-त् प्रतिबन्धकाभावस्य कारणत्वं नापेयते, तदापि तदभावविशिष्ट-त्वं कारणे वाच्यमेवेत्यभ्यासाभावविशिष्टमनसो विविक्तात्मदर्शनं प्रति कारणत्वं, न स्वविशिष्टस्यापीति नेदानीन्तनमनसोऽपि कारण-त्वमित्याहुः ॥ अत एवेत्यादि ॥ महतीत्न ॥ शान्त इत्यादिश्रुतिबोधि-तेन ॥ २८९ ॥ २९० ॥ २९१ ॥ २९२ ॥ २९३ ॥ मुख्येत्यादि ॥ ननु भ-वत्वेवं, तथापि ससाधनमनसा जातं मुख्यज्ञानं स्वध्यासं निवारयि-ष्यति । तदा यावद्दु खनिवृत्तिर्भविष्यतीति शङ्कायां तदानीमपि सात्विकमेव ज्ञानमिति तन्निवृत्तिर्नास्तीत्याहेत्यर्थः ॥ साध्य इति ॥ मनोव्यापारो विचाररूप । एतेन, ज्ञानेऽपि सात्विकी मुक्तिरित्युक्ताया मुक्तेः स्वरूपमुक्तम् ॥ सैव मायानिवर्तिकेति ॥ मायायाः निवर्तिका या सामग्री सेत्यर्थः । तथाच भगवत्प्रसादः अभ्यासनिवर्तिका, ने-तरदिति भावः । प्रपञ्चभावे ज्ञानस्याप्रयोजकत्वं यदुक्तं तदुपोद्वल-यन्ति ॥ ज्ञानिनामित्यादि ॥ तथाच साक्षात्कारस्यापि चेदभ्यासनि-वर्तकत्वं तदा कुतस्तरां शाब्दस्येति भावः । अथ तुष्यतु दुर्जनन्या-येन प्रपञ्चभावेऽपि प्रपञ्चज्ञानस्य तथात्वमङ्गीक्रियते तदापि तद्वैय-र्थ्यरूपं दूषणमाहुः ॥ किञ्चेत्यादि ॥ अत इति ॥ तत्त्वेन ज्ञाने तज्ज्ञान-स्य प्रयोजकत्वात् ॥ कार्यसिद्धाविति ॥ ब्रह्मणः सर्वात्मकत्वादेक-त्वाच्च तज्ज्ञानेनैवात्मनोऽपि ज्ञानसिद्धौ । तथाच धनार्थं धावमान-स्य संचितनाशापात इति भावः । ननु स हि तत्त्वतो ज्ञातः स्वा-ऽऽत्मसाक्षात्कारस्योपकरोतीति निश्चितब्रह्मज्ञानस्य सहकारित्वमेवेति ना-ऽऽत्मसाक्षात्कारस्य वैयर्थ्यमिति चेत्तत्राहुः ॥ अपरोक्षेत्यादि ॥ तथा-चैवं ब्रह्मज्ञानस्य सहकारित्वे ब्रह्मैकदेशे शारीर एव साक्षात्त्वमिति तेनापरोक्षेण शोकनिवृत्तिरेव भविष्यति न तु, ब्रह्मविदाप्नोति परमिति श्रुत्युक्ता परप्राप्तिरपीति ब्रह्मज्ञानवैफल्यापत्तिर्दुन्दिलसुरतापत्तिरित्यर्थः । एतेन तस्यां मुक्तावनादरः समर्थितः । ननु ब्रह्मज्ञानस्येदमेव फलम-स्त्वतो न वैफल्यमिति चेत्तत्राहुः ॥ सर्वज्ञत्वेत्यादि ॥ फले आपाततव-मयान्तरत्वं च । तथाच यस्मिन् विदिते सर्वमिदं विदितं भवतीत्या-

मामित्याकाङ्क्षायां, ज्ञानी चेद्भजते कृष्णं तस्मान्नास्त्यधिकः पर इति, भजनं सर्वथा मतमिति च पूर्वोक्तं दृढीकर्तुं प्रमाणमाहेत्यर्थः। नन्वस्मिन् वाक्ये कथं भक्तिचारम्यसंपादकभक्तगुत्कर्षस्य लाभ इत्याकाङ्क्षायामुपपादयन्ति ॥ ज्ञानीत्यादि ॥ तथा निरूपणादिति ॥ सप्तमस्य इति षष्ठाध्यायस्थसंदर्भे ज्ञानिनोऽप्यपेक्षया योगिन उत्कर्षमुक्त्वा, योगिनामपि सर्वेषामित्यनेन भक्तस्य ततोऽप्युत्कर्षकथनेन ज्ञान्यपेक्षया भक्तस्योत्कर्षस्य नितरां बोधनादित्यर्थः श्रीभागवतस्य गीताविस्तारत्वादुक्तोपष्टम्भाय तत्संमतिमाहुः ॥ न तयेत्यादि ॥ तथाच तत्र ज्ञानी त्वात्मा उक्तः। भक्तस्तु ततोऽप्यधिकोऽभीक इति माहात्म्यं स्पष्टमतः पूर्वोक्तं निर्विवादमित्यर्थः। नन्विदं न युक्तम्। तथाहि। मामेवेति वाक्यं सप्तमाध्याये। तदारम्भे, ज्ञानं तेऽहं सविज्ञानमिदं वक्ष्यामीत्युपक्रमात् विदुर्युक्तचेतस इत्युपसंहाराच्च मध्येऽपि ज्ञानमेवोच्यते। अत एव, बहूनां जन्मनामन्ते ज्ञानवान्मां प्रपद्यत इति प्रपत्तिमुक्त्वा तस्याकारमाह, वासुदेवः सर्वमिति एवं सति, मामेव ये प्रपद्यन्त इत्यत्रापि प्रपत्तिशब्दो ज्ञानमेव वक्ति, न तु भक्तिमिति पूर्वोक्तमयुक्तमितिचेत्तत्राहुः ॥ अन्यथा गुह्यत्वेनेत्यादि ॥ ज्ञानानन्तरं गुह्यत्वेनेति संबन्धः। तथाच यद्येवं स्यात्तदा सप्तमाष्टमाभ्यां सपरिकरं ज्ञानमुक्त्वा ततो नवमाध्याये, इदं तु ते गुह्यतमं प्रवक्ष्यामीति प्रतिज्ञाय गुह्यतमे ज्ञानविज्ञाने पापमोक्षाय वदता, मया ततमित्यारभ्य, शुभाशुभैरेवं मोक्ष्यसे इत्यन्तेनोक्त्वा राजविद्यातोऽपि यद्राजगुह्यं बुद्धिस्थं प्रवक्ष्यामीत्यनुपङ्क्तेन द्वाभ्यां प्रतिज्ञातं तदाह, समोऽहं सर्वभूतेष्वित्यारभ्य, मन्मना भवेत्यन्तेन। अत एव, मामेवैष्यसीति पृथक् फलसंबन्धः। राजविद्याराजगुह्ययोग इत्यध्यायनाम च युज्यते। अष्टादशे च, सर्वगुह्यतमं भूयःशृणु प्रतिज्ञाय, मन्मना भव, सर्वधर्मान् परित्यज्येति कथितम्। अतो मामेवेत्यत्र प्रपत्तिपदेन सर्वथा भगवत्संबन्ध एवोच्यते. स त्वन्यथानुपपद्यमानोऽत्र प्रकरणसहकारेण विद्यापर्वरूपां भक्तिमाक्षिपति। सत्यां च तस्यां वृत्तेश्चरमत्वं सिद्ध्यतीति सा सर्वत्र उत्कृष्टेव यदीदं नाभिप्रेयात्तदैवं न वदेदित्यर्थः ॥ २९४ ॥ २९५ ॥ २९६ ॥ २९७ ॥ २९८ ॥

ज्ञानादीनां हि सर्वेषां तदधीनत्वतः सदा ॥

विधानं सर्वतस्त्यक्त्वा कृष्णमेव भजेद् बुधः ॥२९९॥
न इष्टः श्रुतपूर्वो वा भजन् कृष्णमनामयम् ॥
न भक्तः सर्वथा यस्माद् गोप्यो गावस्तथाऽभवन् ॥३००॥
आपानतस्तु सर्वेषामुपायत्वं मयोदितम् ॥
विष्णोः कृपाविशिष्टानां तत्फलं नान्यथा भवेत् ॥३०१॥
यज्ञ योगेन सांख्येन दानव्रततपोऽध्वरैः ॥
व्याख्यास्वाध्यायसंन्यासैः प्राप्नुयाद्यत्नवानपि ॥३०२॥
तस्मात्त्वमुद्धवोत्सृज्य चोदनां प्रतिचोदनाम् ॥
प्रवृत्तिं च निवृत्तिं च श्रोतव्यं श्रुतमेव च ॥ ३०३ ॥
मामेकमेव शरणमात्मानं सर्वदेहिनाम् ॥
याहि सर्वात्मभावेन यास्यसे ह्यकुतोभयम् ॥ ३०४ ॥
इत्येकादशस्कन्धे भगवान् स्वयमुक्तवान् ॥
आत्मानं हि स्वयं वेद तस्मादन्यवचो मृषा ॥३०५॥
कर्मयोगादयः सर्वे कृष्णोद्गमनहेतवः ॥
उदासीनतयोद्देदास्ते हि सर्वात्मना फलम् ॥ ३०६ ॥
भक्तानत्यादरेणैव प्रकटो जायते हरिः ॥
आत्मानं च ततो दद्यात् सुखं का परिदेवना ॥३०७॥
सहनं खननं गङ्गातीरस्थितिर्यदत्र तत् ॥
सांख्यो योगस्तथा भक्तिस्तत्र प्रेमातिसौख्यदम् ॥३०८॥
पिता यथा बाले सुखं भक्ते तथा हरिः ॥

प्रेम्णैव सर्वतोऽप्यर्थे गोपीनां कामदो यतः ॥ ३०९ ॥
अच्छिद्रसेवनाच्चैव निष्कामत्वात् स्वयोग्यतः ॥
द्रष्टुं शक्यो हरिः सर्वैर्नान्यथा तु कथञ्चन ॥ ३१० ॥
दयया सर्वभूतेषु सन्तुष्ट्या येनकेनचित् ॥
सर्वेन्द्रियोपशान्त्या च तुष्यत्याशु जनार्दनः ॥३११॥
शृण्वन्ति गायन्ति गृणन्त्यभीक्ष्णशः
स्मरन्ति नन्दन्ति तवेहितं जनाः ॥
त एव पश्यन्त्यचिरेण तावकं
भवप्रवाहोपरमं पदाऽम्बुजम् ॥ ३१२ ॥
अन्तर्बहिः साधनयोः स्वरूपं परिकीर्त्तितम् ॥
प्रकारश्चाप्ययं प्रोक्तो दर्शनेनान्यथा तु तत् ॥३१३॥

फलितमाह ॥ ज्ञानादीनामिति ॥ ननु भक्तस्याप्यन्ते ज्ञानं पश्चान्मोक्ष इति कुतो न कल्प्यते। न ह्यात्मनोऽन्य आत्मीयः प्रियो भवितुमर्हतीत्याशङ्क्याह ॥ न दृष्ट इति ॥ श्रुतपूर्वोऽपि नास्ति । दृष्टोऽपि नास्ति । अनामयं तमसः परं, भूयश्चान्ते विश्वमायानिवृत्तिरिति तादृशी मुक्तिः सर्वथापदेनोच्यते । तत्र दृष्टान्तमाह ॥ गोप्यो गावस्तथ ऽभवन्निति ॥ मत्स्वरूपाविदोऽबलाः ॥ ब्रह्म मां परमं प्रापुरिति वाक्यात् ॥२९९॥३००॥ नन्वेवं सति, तमेव विदित्वेति विदितत्वेनेत्यर्थस्य निराक्षितत्वाज्ज्ञानपक्षनिराकरणस्यानङ्गीकाराच्च कथमेवमुच्यत इत्याशङ्क्याह ॥आपातत इति॥ येऽस्माभिर्ज्ञानादय उपायास्तेनोक्तास्ते लोकानां मरोचनार्थं निरूपिताः, तथापि न बाधितार्थत्वम् । भगवत्कृपायुक्तत्वे तेषामपि फलसाधकत्वात् ।

वचनं तु प्ररोचनार्थम् । वस्तुतस्तु कृपैव साधनम् । तमेव विदि-त्वेत्येवकारो नान्यथा व्याख्येयः । अतो नात्मज्ञानं मुख्यफलसा-धकम् । आत्मलाभान्न परं विद्यते । तरति शोकमात्मविद् । अथ योऽन्यां देवतामुपास्ते इत्यादिवाक्येषु आत्मशब्दो भगवद्वाचको, न जीववाचकः । अभेदोपासना च श्रूयते । न हि निन्द्यं निन्दितुं प्रवर्तत इति न्यायात् । नाऽसोमयाजी सन्नयेदितिवाक्यवत्, एकत्वेन पृथक्त्वेनेति भगवद्वाक्यात् । अतो मूलज्ञानं साधनं भवदपि, तावता न भवतीति प्रादुर्भावकरणात् प्रेमैव साधनमिति निश्चीयते ॥३०१॥ अन्येषामसाधनत्वे प्रमाणमाह ॥ यन्न योगेनेति, सार्धत्रयम् ॥ सांख्यं ज्ञानशास्त्रम् । ननु विहिताविहितनिषिद्धत्वाद्विकल्पो भवतु, न स्वसाधकत्वेत्याशङ्क्याह ॥ इत्येकादशसर्वस्वमिति ॥ भगवानेव फल-मिति स चेत् स्वीयाय, तत्र भवतीति निषेधति यदाऽन्यथावाक्यं मृषा । तुल्यबलत्वे हि विकल्पः । भगवतश्च फलत्वं भगवद्वाक्यादे-वावसीयते । यतः परतरं नान्यदित्यादिभिः । तस्माज्ज्ञानादीनां न साधकत्वम् ॥ ३०२ ॥ ३०३ ॥ ३०४ ॥ ३०५ ॥ ननु वेदा अपि भगवद्वाक्यमेवेति श्रुतिस्मृतिविरोधे श्रुतिर्बलिष्ठेति कथं ज्ञा-नस्य साधकत्वं नेत्याह ॥ कर्मयोगादय इति ॥ भगवान् स्ववाक्य-सत्यत्वाय कर्मयोगादिष्वपि प्रकटो भवति, परं निर्बन्धेन, यथा महान् लौकिकः । अत उदासीनतयोक्तिदानात् सर्वथा मुख्यं फलं न प्रयच्छति । भक्तौ विशेषमाह ॥ भक्ताविति ॥ सुखे स्वरूपानन्दे दृष्टान्तेन तारतम्यं बोधयति ॥ सहनमिति ॥ ज्ञानमार्गे दुःखे समागते तन्निवृत्तिः सहनप्राया । यथा तृषायां सहनस्य उपायः । योगस्तु खननप्रायः । भक्तिस्तु गङ्गातीरस्थितिरूपा । दुःखनिवर्तकस्य प्रकटत्वात् । तथापि प्रेमसम्पत्ते गङ्गा स्वयमुद्गम्य पाययति । तथा भगवान् ॥ ३०६ ॥ ३०७ ॥ ३०८ ॥ ननु कीर्तनमात्रं फलात्मा

महान् कथं गच्छेत् ॥ तत्राह ॥ पिता नरेन्द्रेति ॥ स्नेहमार्गे हीनभावो न दोषाय । लौकिकपरमेतदिति न मन्तव्यम् । यतो भगवान् प्रेम्णा गोपीभ्यः अदेयमपि कामं दत्तवान् । न च लौकिकस्यापत्यत्व, पूर्णकामत्वात् । न हि स्वतः इच्छारहितः कोऽप्येवं प्रगच्छति । ननु प्रेम दृष्टे भवति । सर्वथा अदृष्टे कथं प्रेमेत्याशङ्क्य दर्शनोपायमाह ॥ अच्छिद्रमेवनादीति ॥ सेवनं स्वयोग्यानुसारेण । न स्वल्पं बहु वा प्रयोजकम् ॥ ३०९ ॥ ३१० ॥ तत्र बहिःसाधनमाह ॥ दृगयेति ॥ विशेषोपायमाह ॥ शृण्वन्तीति ॥ श्लोकत्रयसंग्रहार्थमाह ॥ अन्तर्बहिरिति ॥ ३११ ॥ ३१२ ॥ ३१३ ॥

फलितमाहेति ॥ पूर्वोक्तप्रकारेण ज्ञाने विचाररूपे जाते यदा तद्भेदेन प्रियतमस्य स्फूर्तिस्तदा भक्तिरूपचरमवृत्त्या साक्षात्कारस्तदा भगवता मुक्तिर्दीयते इति प्रमाणादिषट्कमारभ्य फलपर्यन्तानां सर्वेषां भगवदधीनतया च साधनान्तरं त्यक्त्वा तमेव भजेदित्याहेत्यर्थः । मुक्ते, मदधीनत्वन इति ॥ भगवदधीनत्वादित्यर्थः । अतः परम्, आदिमूर्त्ति कृष्ण पर्यन्तस्य ग्रन्थार्थं स्पष्टीकर्त्तुं किञ्चिदाशङ्क्य परिहरन्ति ॥ ननु भक्तस्येत्यादि ॥ मुक्तिप्राप्त्यसिद्ध्यर्थं भक्त्यपेक्षणे भक्त्यनन्तरं ज्ञानमायातीति तत्र ऽऽशङ्क्यार्थः ॥ न हृष्ट इत्यादि ॥ तथाच प्रमाणान्तरं दृष्टश्रुतविरोधे कल्प्यम् । तदेकमपि नास्ति. तेन कल्प्यता इत्यर्थः ननु केषाञ्चिद् गोपालोपासकानां सम्भाव्यत इत्यत आहुः ॥ मलामयेत्यादि ॥ तथाच सगुणोपासकानां भवतु तथा, न तु गुणातीतभक्तानामित्यर्थः । तत्र प्रमाणमाहुः ॥ भूयश्चान्त इत्यादि ॥ तथाचैतादृशी मुक्तिर्भगवत्सम्बन्धाज्जायत इति श्रूयतेऽतस्तथेत्यर्थः ॥ इयं श्वेताश्वतरोपनिषत्प्रथमाध्याय दशमी ऋक् । क्षरं प्रधानममृताक्षरं हरः क्षरात्मानावीशते देव एकः * तस्याभिध्यानाद्योजनात्तत्त्वभावाद् भूयश्चान्ते विश्वमायानिवृत्तिरिति । तदर्थस्तु क्षरशब्दवाच्यं यत्प्रधानं प्रकृतिः, अमृतशब्दवाच्यं यदक्षरपुरुषः, तदुभयं हरः सर्वाविद्यानिवर्त्तको भगवान् अथवा क्षरं सर्वे जीवाः, प्रधानं प्रकृति, अक्षरं चेति त्रयमनूद्य तेषां हरैक्यमाह । न च हरादिपदानामुपनिषदि दर्शना-

क्विश्वपरत्वमुपनिषदः शङ्कनम् । एवमद्वैतं निरूप्य भाष्यं विशेषमाह । अधरमानौ पूर्वोक्तौ तत्परत्वाहारेण प्रधानमपि हेय. क्रीडागर: सन् इंशाते देहे नियमयति । एकः मुक्त सन् तेनाभेदेऽपि नियन्तृनियाम्यभावः क्रीडया उपपादितः । एवं कथनस्य प्रयोजनमाह । तस्य पूर्वोक्तस्याभिध्य नात् पूर्वोक्तरीतिफलचिन्तनात्, योजनात् संयम्यविशेषात्, तत्त्वभावात् स्वस्य तद्भावभावनात्, भूयश्च पुनरपि, अन्ते प्रारब्धसमाप्तौ साधनपूर्णतायां वा, विश्वमायानिवृत्तिः प्रपञ्चाख्यायाः कर्मापायाः स्वसंपत्तायाः निवृत्तिः संबन्धहानिः । तथाच पूर्वमभ्यासनिवृत्त्या अभ्यासनाभावस्ततः पुनः सायुज्यमित्यर्थः ॥ तदेत्यादि ॥ नन्वत्र श्रुतौ संबन्धेन मुक्तिकथनं भाक्तमस्त्विति चेन्नैवम् । दृष्टान्तस्य सत्यादित्याशयेन तत्र दृष्टान्तमाहेत्यर्थ. ॥ सोऽयं इत्यादि । तथाच य वाक्ये स्वरूपाज्ञानस्य मुक्तेश्च कथनेन दृष्टान्तस्य सत्यान्मुक्तिसिद्धौ भाक्तत्वकल्पनं नोचितमित्यर्थः ॥ २९९ ॥ ३०० ॥ पुनः किञ्चिदाशङ्क्य परिहरन्ति ॥ नन्वेवं सतीत्यादि ॥ एवं सति, तमेवेत्यवधारणेन प्रपञ्चविशिष्टिकानामनुपायत्वेऽङ्गीकृते, सति तमेवेति श्रुतावपि मुख्यवाक्यभूतज्ञानस्य मुक्तिहेतुत्वासिद्धिः । ता विदित्वेत्यत्र अज्ञाभिन्नं शारीरमिति व्याख्याने जीवत्वादिनोक्तहेतोरात्मज्ञानस्य तथात्वासिद्धिप्रकारेण तानि मत्स्तद्भिन्नपकायित्यादिकं पूर्वोक्तं समुत्थापते । अतः कथमनुपायत्वमुच्यत इत्याशङ्काहेत्यर्थ. ॥ येऽस्माभिरित्यादि ॥ तथाच नास्माभिरनुपायत्वमुक्तं तेषामपि तु तेषां सापेक्षत्वात् । यथा फलवचनं स्वर्गकामादिवत् प्ररोचनार्थमित्युच्यते । अतो नास्माकं श्रुतिविरोध इत्यर्थः । तथाच कामादिवज्ज्ञानमपीति भावः । तर्हि जीवपक्षव्याख्यानमप्यादिमतामित्याकाङ्क्षायां नान्यथा मथेदिति मूलं एव व्याकुर्वन्ति ॥ तमेवेत्यादि ॥ अन्यथेति ॥ जीवपरत्वेन । तच्छ्रोस्याभावाहित्श्रुतीनां विरोध इत्यत आहुः ॥ आत्मेत्यादि ॥ तथाच तस्य ज्ञानोपायत्वादुपचारेणोक्तेति न विरोध इत्यर्थः । नन्वस्त्वात्मशब्दस्य भगवद्वाचकत्वं, तथापि भेदोपासननिन्दाश्रुतिबलाद् अभेदस्य तादात्म्ये भक्तेरपि नियतत्वमायातीति न शङ्कानिरास इत्यत आहुः ॥ अभेदेत्यादि ॥ तथाच तस्याः श्रुतेर्भेदोपासनानिन्दायां तात्पर्याभावान्न भक्तेर्नैयत्यमित्यर्थः । एतद्विनिगमनाय दृष्टान्तमाहुः ॥ नेत्यादि ॥

* तथाच यथार्थं च नित्यानुवादः, नासोमयाजी संनयेत् संनयेद्वा । सु-

त्वात् । किन्तु विकल्पपर्यवसायी । तथा निन्दापि विकल्पपर्यवसायिनीत्यर्थः । ननु तत्र कल्पो यथा विकल्पगमकस्तथा नात्र गमकमिति भ्रमप्राप्तस्यैव निन्दा सती प्रसज्ज्य प्रतिषेध एव पर्यवस्यातीति चेन्नेत्याहु ॥ एकत्वेत्यादि ॥ तथाचेतद्वाक्यं श्रुत्वा प्रवृत्त प्रतीतिविकल्प एव पर्यवस्यतीति न नयेत्यर्थः । फलितमाहु ॥ अत इत्यादि ॥ तथाच ज्ञानस्य या साधनता सा साक्षेऽज्ञानत्वेन रूपेणापि तु साक्षात्कारत्वेन रूपेण । साक्षात्कारस्त्वाविर्भावाधीन, आविर्भावश्च, यमेवैष इति श्रुत्या वरणाधीनो, वरण च भगवदधीन, भगवांश्च प्रेमाधीन इति प्रेमैव साधनम् । केवलेन ह भावेनेति वाक्यादिति भाव ॥ ३०१ ॥ अन्यथा मे यादि ॥ ननु भवत्वेव तथाप्यन्येषामसाधनत्वं किं मानमित्याकाङ्क्षायां तदाहेत्यर्थ ॥ विकल्पो भवत्विति ॥ अतिरात्रे षोडशिनं गृह्णाति नातिरात्रे षोडशिनं गृह्णातीत्यादौ तथा निर्णयादित्यर्थः ॥ इत्यादिभिरिति ॥ युक्तात् सद्धर्मरूपादित दोष । ॥ ३०२ । ३०३ । ३०४ ॥ ३०५ । न प्रयच्छतीति ॥ तथाच प्रमाणविचारेण ज्ञानस्य साधकत्वेऽपि प्रमेयविचारेणासाधकत्वमेवाति तथोच्यत इति भाव । भक्तौ विशेषमाहेति ॥ तर्हि भक्तौ कथं पूर्णं फलं दास्यतीत्याकाङ्क्षायां तत्र दास्यत्यथेति हेतुपूर्वकमाहेत्यर्थ । अग्रिम निगदव्याख्यातम् । ३०६ । ३०७ ॥ ३०८ ॥ हीनभावमिति ॥ साधनभावम् ॥ एतदिति ॥ हीनभावाश्रयणम् ॥ मूले, अच्छिद्रेत्यादि ॥ निष्कामत्वात् स्वयोग्यतश्चाच्छिद्रसेवनादेवेतियोजना । स्वयोग्यप्रकार बोधयितु स्वयोग्येति व्याकुर्वन्ति ॥ सेवनमित्यादि ॥ बहुकरणे भगवति भारेणाल्पकरणे कापट्येन छिद्रसम्भवादित्यर्थ । ३०९॥ ३१० ॥ तत्रेत्यादि ॥ दर्शने बहिरङ्गं साधनमाहेत्यर्थ ॥ दययेति वाक्यं चतुर्थस्कन्धसमाप्तौ नारदेनोक्तम् ॥ विशेषोपायमिति ॥ अत्रानुप्रसादमात्रस्योक्तत्वेनानुदर्शनस्यानुक्तत्वात् तदर्थमाहेत्यर्थ. । इदं वाक्य प्रथमस्कन्धे कुन्तीस्तुतौ ॥ अन्तरित्यादि ॥ अन्तरङ्गबहिरङ्गयो साधनयोरित्यर्थ । अत्राच्छिद्रसेवनरूपमन्तरङ्गं साधनं प्रथमे इति क्रमेण ज्ञेयम् ॥ ३११ ॥ ३१२ ॥ ३१३ ॥

सर्वापेक्षापरित्यागात् पौरुषस्य समाजनम् ॥
आसक्त्या भगवद्भक्तैः परं दर्शनसाधनम् ॥ ३१४ ॥

कपिलादिर्महायोगी पूर्वं येनोपलब्धवान् ॥
तं प्रकारमिहोवाच पाक्षिकं तद्धि साधनम् ॥३१५॥
राजवत् कुत्रचित् कृष्णः कस्यचित् केनचित् फलम् ॥
ददाति तावता नित्यं सर्वत्रेति न निश्चयः॥३१६॥
प्रेम्णा सेवा तु सर्वत्र सेव्यवश्यत्वसाधनम् ॥
किञ्चिद्भक्तियुतश्चेत् स्याद्योगादिः साधनं क्वचित्॥३१७॥
सर्वं ब्रह्मात्मकं जानन् कर्म चाऽपि तथाऽऽचरन् ॥
पञ्चकर्मविधानेन षोढाऽपि प्रकटः सदा ।
निर्बन्धेन फलत्येष मम भक्त्या यथा तथा॥३१८॥

इतोऽप्युत्तमं दर्शनोपायमाह ॥ सर्वविशेषेति ॥ येऽन्योऽन्यतो भगवतः प्रसङ्गेऽपेत्यत्र निरूपयिष्यते । ननु कपिलेन भगवदवतारेण निरूपितः कथं नोपायस्तत्राह ॥ कपिलादिरिति ॥ न ज्ञायते भगवांस्तत्र केन हेतुनिमित्तेन देवहूत्यै मुक्तिं दत्तवान् । परं लोके तत्साधनं प्रकटितवान् । पुष्टिमार्गप्रकारेषु तस्या अप्रवेशः । परं पाक्षिकं साधनम् । कथं पुष्टिमार्ग इत्याकाङ्क्षायां तन्निरूपयति ॥ राजवदिति ॥ राजा कदाचित्स्वल्पेनापि सेवकेन मा-रयति । नैतावता सा महनायपि पूज्या भवति । तथा प्रेमापि भविष्यतीत्याशङ्क्याह ॥ प्रेम्णा सेवेति ॥ लोके वेदे च प्रेम्णा सेवायां क्रियमाणायां सेव्यो वश्यो भवति । किञ्च । योगादीनां साधकत्वे च प्रेमसम्बन्धात् । सम्पूर्णेन वेदमार्गेणाप्येतस्य भवतीति पञ्चतु काण्डरूपार्थमनुवदति ॥ सर्वं ब्रह्मात्मकमिति ॥ तथापि निर्बन्धेनैव फलति । वाक्यानुरोधात् ॥ श्लोकोऽत्र नियामकः ॥ ३१४ ॥ ॥ ३१५ ॥ ३१६ ॥ ३१७ ॥ ३१८ ॥

इतोऽपीत्यादि । तृतीयस्कन्धानुसारेण साधनान्तरमाहेत्यर्थः ॥ ये इत्यादि ॥ अत्रापि, मत्पादसेवाभिरता मदीहा इति पूर्वोक्तादस्मिन्नप्युपाये सेवानुसरिष्यतीति प्रतिभाति ॥ कपिलादिरिति ॥ महायोगी पूर्वं येनोपलब्धवान् तं प्रकारं कपिलादिरिहोवाचेति संबन्धः । अत्र गमकमाहुः ॥ न ज्ञायत इत्यादि ॥ केन हेतुनिमित्तेनेति ॥ मत्प्रभिरत्याद्येवंतावत्कमुक्त्वाग्रे मुक्तिकथनात् केन साधनेन केन प्रयोजनेनेत्यर्थः । प्रयोजनस्यापि प्रयोजकतया निमित्तत्वमविरुद्धम् ॥ तस्या इति ।मुक्तेरित्यर्थः ॥ तथेत्यादि ॥ राजभार्यावत् प्रेमापि साधनान्तराभिभाव्यं भविष्यति तथाच तस्यापि पाक्षिकत्वमित्याशङ्क्येत्यर्थः । एतेन तीर्थादावपि या मुक्तिरित्यादिनोक्ते मुक्तिरुक्ता । सर्वेत्यस्यार्थमाहुः ॥ लोके वेदे चेति ॥ महावाक्ये माहात्म्ये प्रतिपाद्याऽभेदप्रतिपादनेन निरुपाधिस्नेह एवाभिप्रायात् । भगवान् ब्रह्म कार्त्स्न्येन इत्यत्रापि तथोक्तत्वाल्लोकेऽपि तथा दर्शनादिति न प्रेम्णि पाक्षिकत्वशङ्केति भावः ॥ प्रेमसंबन्धादिति । कोचित् स्वदेहान्तरित्यादौ द्वितीयस्कन्धं तथा निर्णयाच्चेत्यर्थः । लोकेत्यादि ॥ स्ववाक्यानुरोधे क्रियमाणे लोकप्रवाह ,कर्मयोगादयः सर्वे इत्यत्रोक्तरीत्या नियामक इत्यर्थः ॥ ३१४ ॥ ३१५ । ३१६ । ३१७ । ३१८ ॥

कणादादिमुनिश्रेष्ठाः शुक्रमोहितबुद्धयः ॥
वृथाशास्त्रकलापं हि जगुस्तेन न चान्यथा ॥३१९॥

षट्पदार्थषोडशपदार्थज्ञानान्निःश्रेयसाऽधिगम इत्यादिकापिलवाक्यानां का गतिरित्याह ॥ कणादादिमुनिश्रेष्ठा इति ॥ दैत्यानामर्थे शुक्रेण ऋषयो विमोहिताः । मोहदशायां च शास्त्राणि कृतवन्तः । अतो वेदविरुद्धत्वाद् भ्रान्तकृतत्वाच्च न तानि प्रमाणानि ॥ ३१९ ॥

इत्याहेति ॥ इत्याकाङ्क्षायामाहेत्यर्थः ॥ दैत्यानामर्थे इति ॥ दैत्यानां हितार्थे । तदिदं शुक्रमोहितत्वं पुराणान्तरादवधेयम् । एवं पुराणे तेषां शिवकृतमोहकथनात्तेषु प्रकारान्तरेऽपि मोहितत्वानपायात् । तदुक्तमधस्तात् ॥ ३१९ ॥

प्रेम्णोऽन्यत् साधनं लोके नास्ति सुगमं परं महत् ।
श्रीभागवतमेवात्र परं तस्य हि साधनम् ॥ २२० ॥
अधिकारमभिप्रायं ज्ञात्वा भक्तमुखेन हि ॥
सकृच्छ्रवणमात्रेण कृष्णे प्रेम भवेद् ध्रुवम् ॥ २२१ ॥
विरक्तो विपरीतादिभावनारहितः सुहृत् ॥
लीलामात्रश्रुतौ तस्य भवेत् प्रेमाऽखिलं किमु ॥ २२२ ॥
श्रीभागवततत्त्वार्थमतो ज्ञेयं सुनिश्चितम् ॥
यज्ज्ञानात् परमा प्रीतिः कृष्णे शीघ्रं फलिष्यति ॥ २२३ ॥

इति श्रीवल्लभाचार्यविरचिते श्रीभागवततत्त्वदीपे
सर्वनिर्णयकथने नाम द्वितीयं प्रकरणम् ॥

एवं सर्वं निरूप्य प्रेमभक्तिमार्गमुपसंहरति ॥ प्रेम्णोऽन्यदिति ॥ इत्यादिना जाते प्रेम्णि दोषदर्शनाभिवर्तते । दोषश्च शास्त्राभावे लोकदृष्ट्या भवति । अतः श्रीभागवतमेव सर्वशास्त्रार्थनिर्धारकं सर्वमाहात्म्यज्ञापकं प्रेमोत्पादकं भवति ॥ यस्यां वै श्रूयमाणायामिति ॥ लोकस्याजानत इति वाक्यात् । तत्र लोके श्रीभागवतश्रोतॄणां प्रेमाभावं दृष्ट्वा न श्रवणं साधनमित्याशङ्क्य विशेषमाह ॥ अधिकारमिति ॥ श्रवणस्याङ्गत्रयं—भागवतस्य सम्यक्तात्पर्यज्ञानं, भक्तमुखाच्छ्रवणं, श्रोतुश्च वैराग्यादीनि । एतदभावे न फलतीत्यर्थः इतोऽप्युत्तमाधिकारे भागवतैकश्लोकेनापि भक्तिर्भवतीति कैमुतिकन्यायेनाह ॥ विरक्त इति ॥ सर्वथा लोकेषु विरक्तः, भागवतोक्ते असंभावनाविपरीतभावनारहितः । तीर्थादिना शुद्धान्तःकरणो विदुरतुल्यः । ततोऽप्यधिको वा उद्धवतुल्यः । तस्य लीलामात्रश्रु-

तावपि भक्तिर्भवति । अतो मुख्याधिकारे संपन्ने भागवतश्रवणे भक्तौ न कोऽपि संदेहः ॥ ३२० ॥ ३२१ ॥ ३२२ ॥ नन्वेवं सति भवतः क उपयोगः, तत्राह ॥ श्रीभागवततत्त्वार्थमिति ॥ भागवतार्थे अज्ञाते, अन्यथा ज्ञाते च भक्तिर्न भवतीति । अधिकारेऽपि जाते फलं न भविष्यतीति मयोपायः क्रियते, तत्त्वार्थो विविच्योच्यते । यस्मिन् ज्ञाते सर्वथा भक्तिर्भवत्येव । नापि जाता भक्तिस्तूष्णीं तिष्ठति । तादृशी भविष्यति या लतावत् प्रसह्य वृद्धिमायान्ती शीघ्रं कृष्णाख्यं फलं फलिष्यति । अतो भक्तीच्छायां सर्वथैतदनुसंधेयमिति ग्रन्थारम्भः समर्थितः ॥ ३२३ ॥

इति श्रीभागवततत्त्वदीपटीकायां श्रीवल्लभदीक्षितविनिर्मितायां सर्वनिर्णयविवरणं द्वितीयं प्रकरणम् ॥ २ ॥

यदि प्रेमैव साधनं तर्हि लौकिकप्रबन्धादिभ्योऽन्यतोऽपि वा तद्भविष्यति । श्रीभागवतोक्तरीतौ किमित्याग्रह इत्याकाङ्क्षायां पूर्वोक्तं स्मारयितुमाहुः ॥ कथ्यादिनेत्यादि ॥ व्यभिचारमाशङ्क्य परिहर्तुमाहुः ॥ तत्रेत्यादि ॥ अत्र तात्पर्यज्ञानस्याङ्गता, तस्माद्भारतेऽप्युक्ता । भक्तमुखाच्छ्रवणस्य शुकसूतादिवक्तृनिरूपणात् सिद्ध्यति । वैराग्यस्य च राजशौनकादिभ्यः शेषं निगदव्याख्यातमिति शुभम् । अत्रैतद् बोध्यम् ॥ उत्तरतन्त्रे साधनाध्यायप्रथमपादे रहत्याधिकरणमारभ्याऽन्तं पूर्वजन्मशुद्धिपितृशुद्धिविचारपूर्वकं ज्ञानाधिकारिणः शरीरनिष्पत्तिर्विचारिता । तादृशशरीरनिष्पत्तिरिदानीं दुर्घटा । अत्राद्यशुद्ध्या तपोऽभावेन वेदानां यातयामतया च रेतःसिग्योन्योः शुद्ध्यभावात् । तथा द्वितीयपादे मुक्तियोग्यतां विचार्य ज्ञानविषयो य उभयलिङ्गाद्यधिकरणैर्विचारितस्तदवधारणमपि पूर्वोक्तदेहादिकं विना दुर्लभम् । न चेदमप्रयोजकम् । प्रथमपादेन तथाऽवधारणात् । अन्यथा द्वितीयेऽध्याये नामरूपव्याकर्तृत्वादिविचारोत्तरमेवोभयलिङ्गाद्यधिकरणानि भगवान् व्यासो वदेत् । अतो न पूर्वोक्तयोग्यतां विना विद्योदय । तदेतदुक्तं, सत्ये युगेति महतां भवत्यतस्र चाऽन्यथेति * । न शब्दात् मुक्तिचारितादिति च । तथा तृतीयतुरीयपादयोरन्तरङ्गबहिरङ्गसाधनं विचारितम् तेन विद्याद्वयं

तत्रापि भक्तिर्भवति। अतो मुख्याधिकारे संपन्ने भागवतश्रवणे भक्तौ न कोऽपि संदेहः ॥ ३२० ॥ ३२१ ॥ ३२२ ॥ नन्वेवं सति भवतः फलोपयोगः, तत्राह ॥ श्रीभागवततत्त्वार्थमिति ॥ भागवतार्थे अज्ञाते, अन्यथा ज्ञाते च भक्तिर्न भवतीति। अधिकारेऽपि जाते फलं न भविष्यतीति प्रयोपायः क्रियते, तत्त्वार्थो विविच्योच्यते। यस्मिन् ज्ञाते सर्वथा भक्तिर्भवत्येव। नापि जाता भक्तिस्तूष्णीं तिष्ठति। तादृशी भविष्यति या लतावत् प्रसह्य वृद्धिमायान्ती शीघ्रं कृष्णाख्यं फलं फलिष्यति। अतो भक्तीच्छायां सर्वथैतदनुसंधेयमिति ग्रन्थारम्भः समर्थितः ॥ ३२३ ॥

इति श्रीभागवततत्त्वदीपटीकायां श्रीवल्लभदीक्षितविनिर्मितायां सर्वनिर्णयविवरणं द्वितीयं प्रकरणम् ॥ २ ॥

यदि प्रेमैवसाधनं तर्हि लौकिकप्रबन्धादिभ्योऽन्यतोऽपि वा तद्भविष्यति। श्रीभागवतोक्तरीतौ किमित्याग्रह इत्याकाङ्क्षायां पूर्वोक्तं स्मारयितुमाहुः ॥ कल्यादित्यादि ॥ व्यभिचारमाशङ्क्य परिहर्तुमाहुः ॥ तत्रेत्यादि ॥ अत्र तात्पर्यज्ञानस्याङ्गता, तस्माद्भारतेत्यत्रोक्ता। भक्तमुखाच्छ्रवणस्य शुकसूतादिवक्तृनिरूपणात् सिद्ध्यति। वैराग्यस्य च राजशौनकादिभ्यः शेषं निगदव्याख्यातमिति शुभम्। अत्रेदं बोध्यम् ॥ उत्तरतन्त्रे साधनाध्यायप्रथमपादे रंहत्यधिकरणमारभ्याऽन्तं पूर्वजन्मशुद्धिपितृशुद्धिविचारपूर्वकं ज्ञानाधिकारिणः शरीरनिष्पत्तिर्विचारिता। तादृशशरीरनिष्पत्तिरिदानीं दुर्घटा। अन्नाद्यशुद्ध्या तपोऽभावेन वेदानां यातयामतया च रेतःशोणितयोः शुद्ध्यभावात्। तथा द्वितीयपादे मुक्तियोग्यतौ विचार्य ज्ञानविषयो य उभयलिङ्गाद्यधिकरणं विचारितस्तदवधारणमपि पूर्वोक्तदेहादिकं विना दुर्लभम्। न चेदमप्रयोजकम्। प्रथमपादेन तथाऽवधारणात्। अन्यथा द्वितीयेऽध्याये नामरूपव्याकर्तृत्वादिविचारोत्तरमेवोभयलिङ्गाद्यधिकरणानि भगवान् व्यासो वदेत्। अतो न पूर्वोक्तयोग्यतां विना विद्योदयः। तदेतदुक्तं, सत्ये युगेति महता भवत्यतन्त्र चाऽन्यथेति *। न शब्दात् शुचिचारितादिति च। तथा तृतीयतुरीयपादयोरन्तरङ्गबहिरङ्गसाधनं विचारितम्। तेन विद्यादये

ऽपि तदभावे सर्वात्मना नाऽविद्यानाशः । तदेतदुक्तं, स्वप्नो जागरणं चेत्यादि ॥ एवं सति, तत्त्वमस्यादिवाक्ययोक्ताभेदज्ञानमात्रे शास्त्रस्य न पर्यवसानं, किन्तु साधनान्तरं । तच्च भक्तिरूपमेव, नेतरदिति गीतैकादशस्कन्धस्थभगवद्वाक्यैरेवावसीयते । अतः सूत्राणामपि तत्रैव तात्पर्यम् । तदेव लिङ्गभूयास्त्वाद्यधिकरणेषूपपादितम् । तदेतदुक्तम्- इदमेवेत्यारभ्यान्यवचो मृषेत्यन्तेन । किञ्च । पूर्वाध्यायद्वयं सर्वसामर्थ्यवत्त्वं भगवतः स्थापयित्वा मतान्तराणि चापाकृत्य तृतीये यत् साधनं वैदिकं विचारितं तेन वैदिकसाधनादेव मुक्तिर्नेतरैः स्मार्तैः । वैदिके च कालादिवैगुण्यात् कुण्ठे तन्निरपेक्षा गीताश्रीभागवतयोरुक्ता भक्तिरेव साधनमिति जिज्ञासाशास्त्रादिप्रणयनोत्तरं श्रीभागवतकारणादवसीयते । इदं च प्रथमस्कन्ध एव स्फुटम् । तच्च जिज्ञासाशास्त्रस्याप्येतदनुरोधित्वमेव । तदेतत् सर्वं तृतीयस्य तुरीयपादे उपपादितम् । आर्त्विज्यसूत्रे उक्तं च, भक्तिमार्गप्रचारैकहृद्यो बादरायण. * मानं भागवतं तत्र तेनैवं श्रेयमुत्तमैरिति । तदिदमुक्तं कर्मयोगादय इत्यारभ्य, नच भक्त्या यथा तथेत्यन्तम् । एवमत्रोत्तरमीमांसानिर्णयोद्धारप्रतिज्ञा पूरिता । अतः परमेका प्रतिज्ञाऽवशिष्यते । गुणानामपि त्रैविध्ये हेतुरग्रे वक्तव्य इति । सा श्रीभागवतार्थनिबन्धे पूरणीयेति सर्वं निष्कलङ्कमिति शुभम् ॥ ३२० ॥ ॥ ३२१ ॥ ३२२ ॥ ३२३ ॥

स्निग्धं सितं रसघनं हृदयं स्वकीयं
वक्तुं निजेषु नवनीतमयं दधानः ॥
प्रेङ्खश्रितोऽलितरले जनमानसेऽपि
हासे दयालुरिति तस्य गुणं व्यनक्ति ॥ १ ॥
यस्तस्य पूर्णैः करुणाकटाक्षैः पूर्णोऽभवत् सर्वविनिर्णयेऽपि ॥
अस्यर्थगम्भीरविशुद्धतत्त्वदीपप्रकाशाऽऽवरणस्य भङ्गः ॥ २ ॥

इति श्रीमद्वल्लभाऽऽचार्यचरणनखचन्द्रचन्द्रिका-
निरस्तहार्दतमसस्तद्दासदासस्य गोस्वामि-
श्रीपीताम्बरसुतस्य पुरुषोत्तमस्य कृतौ
तत्त्वदीपप्रकाशावरणभङ्गे
सर्वनिर्णयप्रकरणं द्वितीयं संपूर्णम् ॥ २ ॥

